तत्रापि स्वगृहेषु कोऽपि गुणवद्गोष्ठीगरिष्ठीकृत-
स्फारोऽनारतभारतीरसपरिष्यन्दः सखे सुन्दरः ॥ ६३ ॥
ते वन्द्या मकरन्दबिन्दुमधुरैरभ्युत्थितादक्षरै-
र्येषां वान्ति सरस्वतीपरिमलोद्गारा मुखाम्भोरुहात् ।
वन्द्यास्तेऽपि तदन्तरालपतिता ये भृङ्गभङ्गीजुषः
सान्द्रानन्दकरम्बितं जगदिदं विन्दन्ति नि(न)न्दन्ति च ॥६४॥
दृष्ट्वा देशमशेषमा जलनिधेरालोक्य कौतूहला-
दास्थानीरवनीभृतां च पुनरप्यागत्य देशं निजम् ।
कारुण्यात्तरुणं जनं प्रति सतामभ्यर्थनाभिस्तथा
सोऽयं संप्रति जह्लणेन कविना मुग्धोपदेशः कृतः ॥ ६९ ॥
विद्याभ्यासपरम्परापरिचयैर्बाल्यं कृतार्थीकृतं
तारुण्यं तरुणीनिरन्तरपरीरम्भैश्च संभावितम् ।
अस्माकं सुरसिन्धुरोधसि पुनः शंभावदम्भार्चनै-
र्वृद्धत्वस्य विशुद्धतां जनयितुं कर्तव्यशेषः स्थितः ॥ ६९ ॥

इति काश्मीरिकमहाकविश्रीजह्लणप्रणीतो मुग्धोपदेशः ।

---

## श्रीविश्वेश्वरपण्डितप्रणीतं

## रोमावलीशतकम्[1] ।

नाभीह्रदे तव विराजति रोमवल्ली
धूमावली मदनपावकबोधिकेयम् ।
लोकोत्तराद्भुतकृति त्वयि पक्षवृत्ति-
युक्ता भवन्त्यपि पुरा तदभावभाजः ॥ १ ॥
वह्निं विनैव तव रोमलतामिषेण
धूमावली स्फुरति नाभिगभीरदर्याम् ।

१. अस्य विश्वेश्वरपण्डितस्य देशकालादिकं कवीन्द्रकर्णाभरणप्रारम्भे (काव्यमालाया ६६ मितेऽङ्के) प्रोक्तमेव. पुस्तकद्वयमस्य शतकस्यास्माभिरासादितम्. तत्रैकं जयपुरराजगुरुपर्वणीकरोपाह्वनारायणभट्टानां क-संज्ञकम्. द्वितीयं अलवरमहाराजाश्रितपार्वतीयपण्डितलक्ष्मणदत्तपन्तानां ख-संज्ञकं ज्ञेयम्.

संख्यामतीतमतिदुर्लभमत्र तेन
मन्यामहे कुसुमचापमहानिधानम् ॥ २ ॥
उद्दीप्यते तव हृदि स्मरजातवेदा
वक्षोरुहप्रतिहतोऽथ तदुत्थधूमः ।
जानामि रोमलतिकापदवीमवाप्य
नाभीगभीरविवरं प्रविशन्विलीनः ॥ ३ ॥
वक्षोरुहक्षितिभृता मिलितैकभागां[1]
रोमावलीं भुजगराजवधूं विधाय ।
दर्वीकरज्यगिरिचापजितामरारि-
रुद्रोपमेयमसमाशुगमातनोषि[2] ॥ ४ ॥
नाभीसमाश्रयिण उज्ज्वलदीप्रमूर्ते-
र्हाराग्रगुम्फितमहामणिदीपकस्य ।
उद्गत्वरी विलसदञ्जनमञ्जरीव
राजीवगात्रि तव राजति रोमराजी ॥ ५ ॥
वक्षोरुहौ कविवरैस्तव तर्कितौ यौ
स्तम्बेरमप्रवरकुम्भतया वरोरु ।
तन्निर्गलन्मदजलौघतया ध्रुवं तै
रोमालिरूपमपि निह्नुतदृश्यमेव ॥ ६ ॥
नाभीह्रदे निपततां जनमानसानां
नैवाभविष्यदित उद्धरणं कदाचित् ।
रज्जुर्हि रोमलतिकाव्यपदेशभाजी
वक्षोजशैलनियता यदि नाभविष्यत् ॥ ७ ॥
नाभीमुपेत्य सरसीं तव रोमवीथी-
स्तम्भं ततो दुरधिरोहतरं निखाय ।
वक्षोजवप्रमसुबोधसुखं मनोभू-
र्व्यग्रीकृतः सततमुग्रभियाधिशेते ॥ ८ ॥

१. 'भासां' ख. २. 'रुद्रोपमेय' क.

अथ दुर्वृत्तपद्धतिः ।

गुणजालप्रकर्षेऽपि धीवरत्वेऽपि जन्मनः ।
सर्वतीर्थावगाहेऽपि नीचवृत्तिर्न शस्यते ॥ १ ॥

द्विजराजाङ्कसंस्थोऽपि सन्मार्गाकारवानपि ।
विशुद्धिरहितः कश्चिन्न विन्दत्यकलङ्कताम् ॥ २ ॥

अवक्रस्तारकाधीशः परिपूर्णः प्रियोदयः ।
प्राचीं दिशमतिक्रम्य पतनं प्रतिपद्यते ॥ ३ ॥

पततां हन्त केषांचिद्व्रजते मलिनात्मनाम् ।
विशुद्धवर्णयोगोऽपि विपरीतनिमित्तताम् ॥ ४ ॥

पतनानन्तरं कृच्छ्रात्प्ररूढः शुद्धिमानपि ।
द्विजः संछाद्यते नित्यमधरेणापि रागिणा ॥ ५ ॥

जोषमेकपदे स्थित्वा संनिकृष्टान्क्षणाद्ग्रसन् ।
बहिर्दर्शितसंशुद्धिर्बकव्याहारमर्हति ॥ ६ ॥

द्विजस्य सितपक्षस्य कवेरपि निरस्यते ।
नाहंस इति साजात्यं गतिशब्दितवृत्तिभिः ॥ ७ ॥

अव्यवस्थितवृत्तानामभिन्नश्रुतिचक्षुषाम् ।
अधर्मार्जितभोगानामाशीरप्यहितोचिता ॥ ८ ॥

दुष्टैरारोपितः कश्चिदनर्थक्रिययान्विनः ।
असत्कारेण दृश्येत विशुद्धाकारवेदिभिः ॥ ९ ॥

तमः स्वभावमलिनं वृत्त्यालोकोज्झिताश्रयम् ।
दण्ड्यं मित्रेण राज्ञा च दृष्टदोषान्वयं विदुः ॥ १० ॥

जातिमात्रशरणा बहिष्कृताः केचिदादृतजघन्यवृत्तयः ।
रोषणा विपरिधाविनो मुधा ह्रेपयन्ति जनमुज्झितह्रियः ॥ ११ ॥

आलोकावधि यद्दर्शन सुगतिं विन्दन्ति भूतान्यसौ
दृष्टिस्नेहविशेषतो वितनुते वंशे भुजंगभ्रमम् ।
दक्षा भोगिषु केषुचिद्विषमिता दृष्टिं निहन्तु क्षणा-
त्तानप्याशु विनाशयेत्क्षणरुचिः काचित्क्षणस्फूर्जिता ॥ १२ ॥

इति दुर्वृत्तपद्धतिश्चतुर्थी ।

अथासेव्यपद्धतिः।

कठिनः कृशमूलश्च दुर्लभो दक्षिणेतरः।
कश्चित्कल्याणगोत्रोऽपि मनुष्यैर्नोपजीव्यते ॥ १ ॥
दुष्टपङ्कः प्रतिपदं स्यादल्परससंस्थितिः।
काले घनरसैर्योगेऽप्यसेव्यो जीवनार्थिभिः ॥ २ ॥
स्वतः सत्त्वविहीनानां सत्तयैवापराध्यताम्।
कथंकारं प्रतीकारः कल्पकोटिशतैरपि ॥ ३ ॥
अपि संतापशमनाः शुद्धाः सुरभिशीतलाः।
भुजंगसङ्गाज्जायन्ते भीषणाश्चन्दनद्रुमाः ॥ ४ ॥
नीचानुसरणान्मन्ये निसर्गपरिशुद्धयोः।
गतिः कुटिलतां याति गङ्गायमुनयोरपि ॥ ५ ॥
मित्रे भवति वैमुख्यं मैत्री दोषाकरेण च।
अपि तीर्थप्रसूतानां कैरवाणां रजोभृताम् ॥ ६ ॥
अपि निर्मुक्तभोगेन स्वान्तस्थविषयेक्षया।
असद्भावाय जायेत जिह्मगेन सहासिका ॥ ७ ॥
मण्डूकराविणं सर्पं गोमुखं च मृगादनम्।
असुहृत्त्वेन मन्येत मानयन्तं च वैरिणम् ॥ ८ ॥
घोरास्त्यक्तमिथोवैराः सौकर्यवदुपद्रवे।
दण्डेनापि न भज्येरन्पापमण्डलमण्डलाः ॥ ९ ॥
अनाकलितमानुष्याः क्षमासंस्पर्शवर्जिताः।
प्रतिबुद्धैर्न सेव्यन्ते पूर्वदेवविरोधिनः ॥ १० ॥
अमित्रे विश्वासः श्वपचकरके सौमिकरसः
कपाले गङ्गाम्भः खलपरिषदग्रे सुजनता।
परिक्षीणाचारे श्रुतमनुपनीते च निगमः
स्वतः सिद्धां शुद्धिं त्यजति विपरीतं च फलति ॥ ११ ॥
तरतु विवित्सयाब्धिमधिरोहतु शैलतटीं
धमतु च धातुवर्गमभिगच्छतु शस्त्रमुखम्।

तदिदमरुंतुदं यदुत बह्ववधाय भिया
धनमदमेदुरक्षितिभृदङ्गणचङ्क्रमणम् ॥ १२ ॥

इत्यसेव्यपद्धतिः पञ्चमी ।

---

अथ महापुरुषपद्धतिः ।

सतामेव खपुष्पत्वं येषां यत्सदसत्त्वयोः ।
न जातु तस्य तत्ताभ्यामिति तेषां स विश्वदृक् ॥ १ ॥
मुक्तानुगुणवृत्तानां भजतां पावनीं गतिम् ।
नित्यं विष्णुपदे वृत्तिस्तारकाणां सितात्मनाम् ॥ २ ॥
सन्नियोगेन शिष्टानां वर्णादीनां स्वसूत्रतः ।
प्रवृत्तिं च निवृत्तिं च न भिन्द्यात्साधुशब्दवित् ॥ ३ ॥
धर्मसेतुनिविष्टानामखलानां शरीरिणाम् ।
दक्षिणोत्तरवृत्तीनां दृष्टिः पापनिवर्तिनी ॥ ४ ॥
अनङ्गीकृतकामानामनुमानार्हवर्ष्मणाम् ।
धृतनिर्मलतीर्थानां भूतिलेपोऽपि भूषणम् ॥ ५ ॥
अनन्तख्यातिसंपन्नः शुद्धसत्त्वः सुधीर्बलः ।
धत्ते बहुमुखं भोगं श्रुतिदृष्टिस्थिराश्रयः ॥ ६ ॥
अहार्यः सर्वमध्यस्थः काञ्चनद्युतिमुद्वहन् ।
सत्प्रदक्षिणत्वमुपयाति सदोन्नतः ॥ ७ ॥
पुण्यगन्धाः सुमनसः प्रबुद्धाः समयागमे ।
शिरसा परिगृह्यन्ते सादरं त्रिदशैरपि ॥ ८ ॥
अनुकर्तुमपह्नोतुमतिवर्तितुमीक्षितुम् ।
अशक्ये तेजसां पत्यौ मित्रतानुमतिक्षमा ॥ ९ ॥
आहितुण्डिकवृत्तीनामशेषा भोगिनः पदम् ।
न संवर्ताग्निसारथ्ये स्थाता यन्मुखमारुतः ॥ १० ॥
गरुत्मति सुपक्षतां गिरिधुरंधरे धीरता-
मुदन्वति गभीरताममृतदीधितौ सौम्यताम् ।

विवस्वति च दीप्तता विधिरुपाददानश्चिरा-
दनर्घगुणचित्रितं किमपि चित्रमासूत्रयत् ॥ ११ ॥
प्रशस्ति निन्दन्ति प्रशमसुखदिव्यामृतरस-
प्रलीनोदन्यानां परिषदि न संपत्तिसरितः ।
अमित्रोपक्षेपक्षणविगलदात्मीयपृतना-
दृढामर्दत्रस्यद्द्रमिडभटजङ्घाजवभृतः ॥ १२ ॥

इति महापुरुषपद्धतिः षष्ठी ।

---

अथ समचित्तपद्धतिः ।

पुंसः कस्यचिदास्थाने द्विजेन्द्रः सूरिसेविते ।
गुणवत्पक्षपातेऽपि मध्ये तिष्ठति मानभृत् ॥ १ ॥
देशकालविशेषेण विषमत्वसमत्ववत् ।
निशादिवसयोर्दृष्टमहोरात्रस्य न क्वचित् ॥ २ ॥
चकोरस्य दरं देवश्चक्रवाकस्य चादरम् ।
विवस्वान्नाभिसंधत्ते विश्वमेकं प्रकाशयन् ॥ ३ ॥
प्रतिगृह्णति जीमूते प्रत्यर्पयति वा स्वयम् ।
अपूरणमपांपत्युः पूरणं च न लक्ष्यते ॥ ४ ॥
छिद्रं जनयतां तीक्ष्णैरच्छिद्रं बिभ्रतामपि ।
त्रासहीनाः सुमणयः स्वभावादुपकुर्वते ॥ ५ ॥
अनुज्झितसुहृद्भावः सुहृदां दुर्हृदामपि ।
सम इत्येव भाव्योऽपि नम इत्येव भाव्यते ॥ ६ ॥
मरुद्भिः पीड्यमानोऽपि संत्यक्तोऽपि दिवानिशम् ।
विषयस्नेहरहितो रत्नदीपः प्रकाशते ॥ ७ ॥
जनयत्यनिले दावं शमयत्यपि तोयदे ।
अभिन्नैः स्थीयते पुण्यैराश्रमारण्यपादपैः ॥ ८ ॥
अहार्येण कदाप्यन्यैरसंहार्येण कैरपि ।
तितिक्षाकवचेनैकः सर्वं जयति संवृतः ॥ ९ ॥

अमृतस्यन्दिनं कंचित्कृष्णमेघं द्विजः स्मरन् ।
उदन्यया न वेशन्तमुदन्वन्तं च वीक्षते ॥ १० ॥
विदधातु धाम तमसा कृतेन किं यदि वा न वेत्ति न विधिर्न वा वयम् ।
प्रथमापकारचरमं यतस्ततः प्रतियोगिनो भवति तस्य सार्थता ॥ ११ ॥
विभवेष्वपि दोषगन्धहीनः प्रलयेऽपि स्थितिमक्षयां दधानः ।
विषमेष्वपि भावयन्समर्थं पुरुषः कोऽपि हृदि स्थितः प्रजानाम् ॥ १२ ॥

इति समचित्तपद्धतिः सप्तमी ।

---

अथ सदाश्रुतपद्धतिः ।

सुवृत्तस्यावदातस्य कलापूर्णस्य सत्पतेः ।
क्षणलेशग्रहेऽपि स्यादतीर्थस्यापि तीर्थता ॥ १ ॥
प्रतिपत्प्रापितः प्रागप्यपातार्हपदाश्रितः ।
राजा तदितरो वापि नोपरागेण गृह्यते ॥ २ ॥
विषमो गुणभेदेन विकाराञ्जनयन्क्रमात् ।
समये महता योगादहंकारः प्रलीयते ॥ ३ ॥
स्वदृष्टिप्रतिघातोऽपि स्वच्छे क्वचन शोभनः ।
तत्र ह्यभिमुखः स्वात्मा झटित्येव प्रकाशते ॥ ४ ॥
शिक्षके हरिताकारो मेरौ नीलतनुर्द्विजः ।
अपूर्ववर्णवान्भाति सत्यनिष्ठे च कौशिकः ॥ ५ ॥
कलङ्किनि जले क्वापि सौरं प्रतिफलन्महः ।
तमोपहत्वं तनुते समृद्धिं च दिने दिने ॥ ६ ॥
स्वतश्चैतन्यभिन्नस्य विषमच्छिद्रभागिनः ।
कस्यचित्प्राज्ञमूलाः स्युः पुरुषार्थप्रवृत्तयः ॥ ७ ॥
महान्तं पुरुषं प्राप्य कंचित्सत्त्वप्रवर्तकम् ।
प्रतिबुद्धो जनस्तेन परमं साम्यमश्नुते ॥ ८ ॥
सूत्रं रत्नसमावेशाच्चर्मसंश्रयसत्पदात् ।
तदभेदेन गृह्येत तृणमप्यस्त्रमन्त्रणात् ॥ ९ ॥

एकयैव गुरोर्दृष्ट्या द्वाभ्यां वापि लभेत यत् ।
न तत्तिसृभिरष्टाभिः सहस्रेणापि कस्यचित् ॥ १० ॥

रथ्यातोयं त्रिदशसरिता राजनीतिः सुकीर्त्या
काव्यालापस्त्रियुगकथया कायवानात्मबुद्ध्या ।
दारप्रीतिः प्रजननधिया जन्तुहिंसा मखेन
प्रज्ञाहीनः परहितविदा संगतः शुद्धिमेति ॥ ११ ॥

विभुर्बन्धं प्राप्य व्यतनुत विमुक्तिं व्रजभुवां
स्वतन्त्रोऽसौ दूतः स्वयमजनि सूतश्च भजताम् ।
प्रतिज्ञां स्वामौज्झत्स्वपदतटिनीसूनुसमरे
महद्योगात्प्रायो वहति महिमानं तदधिकम् ॥ १२ ॥

इति सदाश्रुतपद्धतिरष्टमी ।

---

अथ नीतिपद्धतिः ।

विक्रमाक्रान्तभुवने समे षाड्गुण्यशालिनि ।
भजति स्थिरतां लक्ष्मीः कस्मिंश्चित्पुरुषोत्तमे ॥ १ ॥

पार्थिवानां पदार्थानां स्वभूत्या चक्रवर्तिनाम् ।
सूचयत्यचिराद्भेदं छिद्रेण महतान्वयः ॥ २ ॥

सदसन्तौ विचिन्वानः समवर्ती शमप्रदः ।
अपि दण्डधरो नित्यं लोकपालः सदक्षिणः ॥ ३ ॥

यमेनोपक्रमे जानन्विश्वाधीशं व्यवस्थितम् ।
शमादिषु च तत्त्वज्ञः सनकः सिद्धिमर्हति ॥ ४ ॥

अङ्गयुक्तः कृतास्त्रश्च कुर्वन्सम्यक्पुरोविधिम् ।
विजानन्सिद्धसाध्यादीन्वैरिमन्त्रैर्न पीड्यते ॥ ५ ॥

आमाधिकरणग्राह्यमूलादिबलशालिनः ।
अहीनेऽपि नरेन्द्रस्य शक्तयः सिद्धिहेतवः ॥ ६ ॥

प्रद्युम्नो ह्यनिरुद्धात्मा स्वनाम्ना मानसोदयः ।
वीरः कश्चिद्विजानीते स्त्रीप्रायमखिलं जगत् ॥ ७ ॥

तमिस्राचारिणां रोद्धा विजिताक्षो मरुत्प्रियः ।
कपिकृत्यैरपि स्थाने भाति वेलातिलङ्घिभिः ॥ ८ ॥
प्रयुक्तं मन्त्रिभिः काले भक्तिभेदपुरस्कृतम् ।
अपि ज्वलनवक्राणां साम संवननं परम् ॥ ९ ॥
विधौ लब्धधृतिर्नित्यं विनतानन्दनो द्विजः ।
नियम्यमानैः स्थानेषु भुजगैरपि भूष्यते ॥ १० ॥
नीतिः सती त्वयि परं परपुष्टया तु
पुत्रीकृतोऽसि बलिपुष्टकुलैर्यतस्त्वम् ।
दूरीकृतश्च पुरुषैस्तत एव काले
कण्ठे यदेष तव पञ्चममुच्चकार ॥ ११ ॥
विबुधमहिते मेरावैरावणः करटी मुहुः
कषतु करटं कण्डूलं स्वं क्षरन्मदकर्दमम् ।
भजतु च तटक्रीडां पीडाभिसंधिरसौ दृढं
न तु मलिनता नापि क्षोभः क्षमाभृति संभृतः ॥ १२ ॥

इति नीतिपद्धतिर्नवमी ।

---

अथ वदान्यपद्धतिः ।

आभिरूप्यदशामात्राद्वदान्य इव सज्जनः ।
शीघ्रं रक्तमरक्तं वा गृह्णाति स्वप्रसादतः ॥ १ ॥
अप्यनावर्जिताः स्वेन फलभारेण संनताः ।
अर्भकैरपि गृह्यन्ते साधुसंतानशाखिनः ॥ २ ॥
निर्मुक्तभवनक्षेत्राः स्युः सदागतिनिर्वृताः ।
प्राप्ते भूपविपर्यासे भोगिनः खलु योगिनः ॥ ३ ॥
सर्वेषामुत्तरामाशां धनदो यः परीक्षते ।
सत्यं मनुष्यधर्मैव स तु पुण्यजनेश्वरः ॥ ४ ॥
येषां हिरण्यकशिपुक्षेत्रदानकरः करः ।
तेषां तिर्यङ्मुखत्वेऽपि पुरुषत्वं न हीयते ॥ ५ ॥
मुख्यदानोदकक्लिन्नकरः ख्यातक्षमाधृतिः ।
लोकपालाश्रितः कश्चिदनाशावारणः कथम् ॥ ६ ॥



क्षोभितोऽपि बुधैः कश्चिद्गम्भीरमधुराशयः ।
चन्द्ररत्नगवाश्वादिसहितां दिशति श्रियम् ॥ ७ ॥
वदान्यश्च कदर्यश्च गृहीतस्थिरलोभतः ।
स्वानर्थान्संचिनोत्यर्थान्परानर्थैर्योजयन् ॥ ८ ॥
अनिःशेषितदातव्यं वदान्यदिति वादिनम् ।
नोपसर्पति सव्रीडा व्रीडा कुलवधूरिव ॥ ९ ॥
अपुनर्देहिशब्दार्हमप्रत्युपकृतिक्षमम् ।
अर्थिनं कुरुते कश्चित्पुनरावृत्तिवर्जितम् ॥ १० ॥
त्वचं मांसं जीवं यदपि ददुरस्थीनि पृथिवीं
श्रियं रत्नाधीशं त्रिदशतरुमैरावतमपि ।
तदेतत्प्रत्येकं मिलितमपि नालं तुलयितुं
मनस्कारोपेतस्थिरमधुरकल्पोक्तिकणिकाम् ॥ ११ ॥
अनिर्घातं धाराधरममथनीयं निधिमपा-
मकाठिन्यं चिन्तामणिमजडभूतं सुरतरुम् ।
अभित्त्वोपादाय प्रभुरपशुवृत्तिर्न सुरभिं
परार्थैकस्वार्थानकृत पुरुषानादिपुरुषः ॥ १२ ॥

इति वदान्यपद्धतिर्दशमी ।

---

अथ सत्कविपद्धतिः ।

अपङ्किलयितुं शुद्धाः साधुमानसवृत्तयः ।
वमन्ति श्रुतिजीवातुं ध्वनिं नवरसास्पदम् ॥ १ ॥
महापुरुषलब्धात्मा सर्गादिप्रथितोदयः ।
वश्यावदातया वाचा सेव्यते चतुराननः ॥ २ ॥
विशुद्धललिताकारा गुणालंकारशालिनी ।
सरसा भारती यस्य ससत्येकः प्रतिष्ठितः ॥ ३ ॥
कुतश्चिदचलस्थानात्प्रयान्ती सागरान्तिकम् ।
दृश्यादृश्यतनुर्भाति श्रुत्यभीष्टा सरस्वती ॥ ४ ॥
प्रभूतोदितमुक्ताभिर्भूयते सूक्तिशुक्तिभिः ।
सुदृशां कर्णपूराय तादृशः फलभेदतः ॥ ५ ॥

प्रतीपमवमृष्टापि स्वाभिमुख्यं न मुञ्चति ।
कालिकेव सतां सूक्तिस्तादृशश्रुतिनन्दिनी ॥ ६ ॥
जलाशयस्य घोषेण जातलौल्यस्य भूयसा ।
कविशब्दं तिरोधाय कश्चिदर्थो न साध्यते ॥ ७ ॥
सदानवोक्तिमहितः प्रतिरुन्धन्प्रतीपगान् ।
प्रथितः काव्यनाम्नापि कविरेकः प्रकाशते ॥ ८ ॥
पूर्वकल्पप्रकारेण पुरुषार्थप्रवृत्तया ।
विचित्रसृष्ट्या विहरन्प्राप्तः कश्चिन्महाकविः ॥ ९ ॥
........................................ ।
........................................ ॥ १० ॥
मतिमन्थजवेन लब्धवर्णा प्रतिपन्ना विबुधैरनन्यभक्तैः ।
सुकवेरनघाशयस्य सूक्तिः स्वदते दुग्धपयोनिधेः सुधेव ॥ ११ ॥
मनुव्यासप्राचेतसपरिषदर्हा क्वचिदियं
सुधासिक्ता सूक्तिः स्वयमुदयमन्विच्छति जने ।
निरुन्ध्युः के विन्ध्याचलविकटसंध्यानटजटा-
परिभ्रान्ता पङ्गोरुपरि यदि गङ्गा निपतति ॥ १२ ॥

इति सत्कविपद्धतिरेकादशी ।

---

अथ परीक्षकपद्धतिः ।

काकानां कोकिलानां च सीमाभेदः कथं भवेत् ।
यदि विश्वसृजा साक्षान्न कृता कर्णशष्कुली ॥ १ ॥
छन्दःप्रत्ययशुद्धात्मा पश्यन्यतिगणस्थितम् ।
वर्णादिनियतं वृत्तं नियुङ्क्ते गौरवादिवित् ॥ २ ॥
सुवर्णमपि दुर्वर्णं युक्त्या दर्शयति क्वचित् ।
व्यनक्ति शुद्धिं सहसा शुचिरेकः स्वतैक्ष्ण्यतः ॥ ३ ॥
स्वच्छस्वादुविशुद्धानां स्रोतसां कलशोदधेः ।
दोषं केऽपि न मृष्यन्ति दुष्टजिह्वेन कल्पितम् ॥ ४ ॥

सहैव भुवने जातं सत्त्वसंस्थापनक्षमम् ।
गृह्यते किमपि स्वस्थैरन्यत्किमपि जिह्मगैः ॥ ५ ॥
कलकण्ठगणास्वाद्ये कामस्यास्त्रे निजाङ्कुरे ।
निम्बवृत्तिभिरुद्गीर्णे न चूतः परितप्यते ॥ ६ ॥
मन्ये किंनरमुख्यानां मौनं जगति सांप्रतम् ।
मशकक्वणितं यत्र वीणास्वनविकल्पितम् ॥ ७ ॥
रत्नाभरणयोग्यानां राजान्तःपुरयोषिताम् ।
क्रीडाकङ्कणनिर्माणे काचोऽपि ललितः क्वचित् ॥ ८ ॥
कटूनामपि सार्थत्वात्कामं भवति संग्रहः ।
तथापि वृत्तिर्न तथा रसज्ञानुमतिक्षमा ॥ ९ ॥
नादं मङ्गलतालानां नागरीनटनोचितम् ।
कृषिक्षमेषु ग्राम्येषु न मूर्छयति गीतवित् ॥ १० ॥
विधिमन्तरेण विहगेन कुतः पयसोरशिक्ष्यत विवेकविधिः ।
कति वा दिनानि वद पर्यचिनोत्कलशीसुतः कवलयञ्जलधिम् ॥ ११ ॥
भूयसीरपि कलाः कलङ्किताः प्राप्य कश्चिदपचीयते शनैः ।
एकयापि कलया विशुद्धया योऽपि कोऽपि भजते गिरीशताम् ॥ १२ ॥

इति परीक्षकपद्धतिर्द्वादशी ।

---

सैषा सुभाषितानां माला महनीयवर्णवृत्तगणा ।
भावुकसंख्यारूढा प्रियपद्धतिभूषिता जयति ॥ १ ॥
कविकथकसिंहकथितं कठोरललितं सुभाषितं नीवी ।
सदसद्विवेकमुखतः संमुखयति सर्वलोकहितम् ॥ २ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य वेदान्ताचार्यस्य श्रीमद्वेङ्कटनाथस्य कृतिषु सुभाषितनीवी ।

KÂVYAMÂLÂ 26.

THE

# DAS'ÂVATÂRACHARITA

OF

# KSHEMENDRA.

EDITED BY

PAṆDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRNAYA-SÂGARA" PRESS.

BOMBAY.

1891.

*Price* 1 *Rupee.*

काव्यमाला. २६.

श्रीक्षेमेन्द्रप्रणीतं

# दशावतारचरितम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९१



मूल्यमेको रूप्यकः ।

# काव्यमाला।

## महाकविश्रीक्षेमेन्द्रप्रणीतं
## दशावतारचरितम्[1]।

मत्स्यावतारः प्रथमः।

अशेषविश्ववैचित्र्यरचनारुचये नमः।
मायागहनगूढाय नानारूपाय विष्णवे[2] ॥ १ ॥

देवः पायादपायात्त्रिभुवनभवनस्तम्भभूतः स युष्मा-
नायुष्मान्यस्य[3] भक्त्या प्रभवति पुरुषः स्वर्गमार्गेऽपवर्गे।
मत्स्यः कूर्मो वराहः पुरुषहरिवपुर्वामनो जामदग्न्यः
काकुत्स्थः कंसहन्ता स च सुगतमुनिः[4] कल्किनामा च विष्णुः ॥२॥

आदिमत्स्यः स जयताद्यः[5] श्वासोच्छ्वासितैर्जलैः।
गगने विदधेऽम्भोधिं गगनं च महोदधौ ॥ ३ ॥

तं नमस्कुर्महे[6] कूर्मं यः कवाटमसंकटम्।
अतीतसर्वब्रह्माण्डमवशेषमिवावहत्[7] ॥ ४ ॥

वराहं नौमि सानन्ता येनोत्क्षिप्ता क्षितिः परम्।
अधोधृतार्धच्छत्रेव[8] तलस्थार्कातपासहा ॥ ५ ॥

---

१. काव्यस्यास्य पुस्तकचतुष्टयमस्माभिरासादितम्. तत्र पुस्तकद्वयं डॉक्टर् बूलरेण कश्मीरदेशादानीतं सांप्रतं पुण्यपत्तनस्थराजकीयपुस्तकालये स्थितं भाण्डारकरोपाह्वरामकृष्णशर्मपण्डितेन्द्रैः कृपया प्रहितम्. तत्र प्रथमं शारदाक्षरैर्लिखितं १०५ पत्रात्मकं क-संज्ञम्. द्वितीयं नागराक्षरलिखितं नवीनं ६७ पत्रात्मकं ख-संज्ञम्. पुस्तकद्वयं चास्मत्परमसुहृद्भिः कश्मीरमहाराजाश्रितैः श्रीविश्वेश्वरदैवज्ञवरैः प्रहितम्. तत्र प्रथमं ५२ पत्रात्मकं नवीनं ग-संज्ञितम्. द्वितीयं ८८ पत्रात्मकं समासौ किंचित्त्रुटितं नवीनं नातिशुद्धं च घ-संज्ञम्. एतत्पुस्तकचतुष्टयमस्मन्मुद्रणाधारतां गतमस्ति.
२. 'शंभवे' ग. ३. 'अस्य कीर्त्या' ख. ४. 'सुकृतमतिः' ग. ५. 'यच्छ्वासोल्लसितैर्जलैः। गगने विदधेऽम्भोधिः' ग. ६. 'नमस्यामहे' ग. ७. 'अतीतमर्धं' क; 'अतीतमर्धब्रह्माण्डमर्धशेष इवावहन्' ख; 'अतीव' घ. ८. 'अतो' ग.

जयाय नृहरिर्वोऽस्तु दैत्योरःशोणितार्णवे।
हारमौक्तिकगर्भास्ताश्चेरुर्यन्नखशुक्तयः॥ ६॥
त्रिविक्रमोऽस्तु भूत्यै वः प्राग्लघ्वी मध्यमा ततः।
यस्य पश्चादनन्ताभूत्सत्संगतिरिवाकृतिः॥ ७॥
अभग्नं जामदग्न्यो वः प्रयच्छतु जयोदयम्।
यत्कुठारकठोराग्नौ भूपालैः शलभायितम्॥ ८॥
नौमि रामं रिपोश्चक्रे यः काञ्चननिभैः शरैः।
होमानलशिखारूढमिव वक्त्रवनं पुनः॥ ९॥
शौरिर्जयति कंसस्य जीवितप्रथमातिथिः।
यश्चक्रे चक्रदानेन बाणबाहुप्रतिग्रहम्॥ १०॥
यस्य सभ्रूभ्रमाकम्पा माररामाः ससैनिकाः।
चक्रुर्न रागं न द्वेषं स शान्त्यै सुगतोऽस्तु वः॥ ११॥
स्वच्छन्दप्रोच्छलन्म्लेच्छतिमिरोद्भेदसच्छविः।
कर्किविष्णुः प्रकाशाय प्रभातार्क इवास्तु वः॥ १२॥
अवतारकथायुक्त्या भक्त्या भगवतो हरेः।
श्रीव्यासदासः क्षेमेन्द्रः कुरुते सरसां स्तुतिम्॥ १३॥
स्वजनस्थितिखिन्नस्य पुण्यारण्यविहारिणः।
हरिभक्तिरसासिक्ताः श्रूयन्तां मम सूक्तयः॥ १४॥
संतोषो यदि किं धनैः सुखशतैः किं यद्यनायत्तता
वैराग्यं यदि किं व्रतैः किमखिलैस्त्यागैर्विवेको यदि।
सत्सङ्गो यदि किं दिगन्तगमनप्रस्थानतीर्थश्रमैः
श्रीकान्ते यदि भक्तिरप्रतिहता तत्किं समाधिक्रमैः॥ १५॥
लसति हसति हर्षात्तीव्रदुःखे परेषां
स्खलति गलति मोहादात्मनः क्लेशलेशे।

१. 'संचेरुः' ग. २. 'पङ्क्तयः' क. ३. 'हेमानल' घ. ४. 'बाणेन' क-घ. ५. 'प्रोल्लसन्' घ. ६. 'कुरुते क्षेमेन्द्रः' क-ख-घ. ७. 'सज्जन' क-ख; 'सुजन' ग. ८. 'विषया यत्तता' क; 'विषया यत्नता' ख.

नदति वदति निन्द्यं मानिनां किं न नीचः
　परुषवचनमल्पं श्रावितो हन्तुमेति ॥ १६ ॥
पुण्यान्यहीनहरिणानि तपोवनानि
　सत्संगतानि शमधर्मविवेचनानि ।
एतानि तानि भवबन्धविमोचनानि
　चर्चोचितानि चरितानि च चक्रपाणेः ॥ १७ ॥
मान्यः किल मनुर्नाम जगज्ज्येष्ठः प्रजापतिः ।
चचार पूर्वमुर्व्यां[1] यः सर्वतीर्थ[2]पथातिथिः ॥ १८ ॥
स बदर्याश्रमं प्राप्य नरनारायणाश्रयम् ।
हरिसंदर्शनधिया चकार सुचिरं तपः ॥ १९ ॥
तं कदाचिदतिस्वल्पतनुस्तनुतरेऽम्भसि ।
उवाच तलसंलीनस्त्रा[3]सान्मत्स्यशिशुः शनैः ॥ २० ॥
भीतोऽहं स्थूलमत्स्येभ्यो रक्ष मां करुणानिधे ।
भक्षयन्ति क्षुधा नि[4]त्यं दुर्बलं बलवत्तराः ॥ २१ ॥
आश्वासनं विषमशोकविमोहितस्य
　भीतस्य भीतिशमनं कृशपक्षपातः ।
धृत्यै विपन्निपतितस्य करावलम्बः
　संपूर्णपुण्यनि[5]चयस्य समुच्चयोऽयम् ॥ २२ ॥
मुनिः श्रुत्वैतदाश्चर्यकारि मत्स्यशिशोर्वचः ।
दयार्द्रस्तं समादाय जलकु[6]म्भान्तरेऽक्षिपत् ॥ २३ ॥
[7]अवर्तमानं कालेन तत्र वृद्धिमुपागतम् ।
समीपवाप्यां चिक्षेप गङ्गायामथ सागरे ॥ २४ ॥
कालेन सकलाम्भोधिव्यापी विपुलविग्रहः ।
कौतुकालोकनायातं मनुं मत्स्यः समभ्यधात् ॥ २५ ॥

---

१. 'उर्व्यां' ग-घ. २. 'महत्तीर्थ' क-ख. ३. 'त्रसत्' ग. ४. 'क्षिप्रं' ग-घ. ५. 'निचयोच्चसमुच्चयः' घ. ६. 'कुण्डान्तरे' ग-घ. ७. 'आवर्तमानं' इति सर्वेषु पुस्तकेषु.

अधुना विषमः कालः कलुषः प्रत्युपस्थितः।
विपरीतनिमित्तानि प्रवृत्तानि प्रजापते॥ २६॥
परदारपरप्राणपरवित्तापहारिणः।
वि[1]चरन्ति नराः कामक्रोधलोभपरायणाः॥ २७॥
धनं नास्त्यस्ति वा स्तोकं तदधर्म्यं न तिष्ठति।
मुष्णाति दक्षिणं पाणिं वामो वामं च दक्षिणः॥ २८॥
दास्यं द्विजः श्रयति शूद्रतपस्विशिष्यः
शू[2]द्रान्वयः कृषिवणिक्क्रि[3]यया कृतार्थः।
वैश्यः स्वजात्यरुचिविप्रविवाहकारी
होता गुरुर्वदति मन्त्रपदानि शूद्रः॥ २९॥
शौचं नास्ति कुतः परोपकृतयः सत्यस्य वार्तैव का
रौद्रः क्षुद्रतया परं परधनद्रोही दरिद्रो जनः।
लेशेनापि सुखं खपुष्पसदृशं स्वैरापचाराः स्त्रियः
संपूर्णं युगसंक्षयस्य पुरतः संलक्ष्यते लक्षणम्॥ ३०॥
कल्पान्तघनसंघातनिर्घातस[4]लिलाहतम्।
जगदेकार्णवीभूतमचिरेण भविष्यति॥ ३१॥
सर्वबीजभृतां तस्मिन्काले सप्तर्षिभिः सह।
म[5]त्सृष्टां नावमारुह्य स्थातव्यं स्थितये त्वया॥ ३२॥
मनः प्रकम्पनं श्रुत्वा मत्स्यस्य वचनं मनुः।
तत्तथे[6]ति प्रतिश्रुत्य जगाम निजमाश्रमम्॥ ३३॥
अथोद्ययौ दिशां देहपरित्यागाग्निमण्डली।
कालजिह्वासमूहाभा द्वादशार्कोदयद्युतिः॥ ३४॥
अनेकोच्चण्डमार्तण्डप्लुष्टे भुवनमण्डले।
चराचरजगत्सर्गः सहसा भस्मसादभूत्॥ ३५॥

---

१. 'प्रचरन्ति' ग-घ. २. 'क्षुद्रान्वयः' क-ख-घ. ३. 'क्रिययाहितार्थः' ख-ग. ४. 'सलिलावहम्' ग-घ. ५. 'संदृष्टां' घ. ६. 'विनिश्चित्य' ग-घ.

अथादृश्यत कालान्तमहिषस्येव संततिः ।
निर्दग्धजगदङ्गारमलिना मेघ[1]संहतिः ॥ ३६ ॥
ततः पपात नीरन्ध्रधारासारभरः क्षितौ ।
विश्वसंक्षयशोकाश्रुप्रवाहः ककुभामिव ॥ ३७ ॥
संवर्तकानलप्लुष्टे सप्तपातालमण्डले ।
कल्पान्तपवनापातभग्ने ब्रह्माण्ड[2]मण्डपे ॥ ३८ ॥
पुष्करावर्तकाम्भोभृत्[3]सृष्टवृष्टिसमुत्प्लवैः ।
जगदेकार्णवीभूतं क्षणेन समपद्यत ॥ ३९ ॥ (युग्मम्)[4]
विपुले विप्लवे तस्मिन्मत्स्यस्य वचनं स्मरन् ।
भुजविक्षिप्तसलिलस्तं द्रष्टुमगमन्म[5]नुः ॥ ४० ॥
स ददर्श महामत्स्यं चण्डांशुशशिलोचनम् ।
कृतैक्यमिव संहारे दिनरात्रिप्रकाशयोः ॥ ४१ ॥
बिभ्राणं मेरुसंकाशं शृङ्गं शिरसि काञ्चनम् ।
अम्भोभिरावृतस्थानं निर्यान्तमिव वाडवम् ॥ ४२ ॥
पुच्छाच्छोटोच्छलितस[6]लिलालोलकल्लोलजालैः
श्वासाभ्यासप्रसरदमलो[7]त्तुङ्गरङ्गत्तरङ्गैः ।
खं कुर्वाणं [8]श्रितमिव घनोल्लासकैलासल[9]क्षै-
र्दृष्ट्वा मत्स्यं हरिरिति मनुस्तत्प्रणामानतोऽभूत् ॥ ४३ ॥
तदुच्चशृङ्गसंलग्नां नावं धृतिमिवायताम् ।
आरुरोह गिरा तस्य सह सप्तर्षिभिर्मनुः ॥ ४४ ॥
तस्मिन्काले निरालम्बे मार्कण्डेयो निराश्रयः ।
देवर्षिः सलिलग्रस्तं दृष्ट्वा जगदचिन्तयत् ॥ ४५ ॥
अहो बत महानेष कालः संकलिताखिलः ।
जगद्ग्रासरसाभ्यासादनिशं न निवर्तते ॥ ४६ ॥

---

१. 'संततिः' क-ख-ग. २. 'मण्डले' क-ख-घ. ३. 'सृष्टि' क-ख-घ. ४. 'युग्मम्' ग-घ-पुस्तकयोर्नास्ति. ५. 'मुनिः' ग-घ. ६. 'सलिलालोक' क-ख-घ. ७. 'तुङ्गत्वङ्गत' क; 'तुङ्गतुङ्गैः' ख. ८. 'श्रृतं' क; 'धृतं' ग-घ. ९. 'लक्ष्यैः' क-ख-ग-घ.

क्व स सनगरग्रामग्रामः समग्रगिरीश्वरः
प्रथितभुवनाभोगः सेन्दुग्रहार्कगतिर्गतः[1] ।
अहह कुटिलस्वप्नोत्पन्नैरिवाश्रिता[2]विभ्रमै-
र्भ्रमयति भवे भावैः कालः कृतैरथ संहृतैः ॥ ४७ ॥

मान्यास्ते मुनयस्तपोवनभुवस्तास्तीर्थसार्थार्थिताः
शौर्योत्साहमहोदयाः क्व बत ते भूभूषणं भूमिपाः ।
अन्ते सज्जनमन्युनीचविनयस्त्रीचित्तधूर्तभ्रम-
स्वप्नाकारमधर्मलब्धधनवत्कष्टं न किंचित्स्थितम्[3] ॥ ४८ ॥

इति संचिन्तयन्दोर्भ्यां विक्षिप्तसलिलस्तरन् ।
तामासाद्य मुनिर्नावमालम्बेऽम्बरोन्मुखीम् ॥ ४९ ॥
आकृष्यमाणः स तया मत्स्यशृङ्गाग्रकृष्टया ।
मग्नोन्मग्नः प्रपेदेऽन्तं संसारस्येव नाम्भसः ॥ ५० ॥

तुङ्गतुङ्गतरङ्गभङ्गविहितव्योमाङ्गनालिङ्गने[4]
वाताघातविभक्तयोजनशतावर्ते च निम्नेऽन्यतः ।
अक्षोभस्थितिनिश्चले स्फटिकभूतुल्ये प्रसन्ने[5] क्वचि-
न्नासालग्नजलः श्वसन्मुनिवरस्तोये श्रमार्तोऽभवत् ॥ ५१ ॥

अनर्कचन्द्रनक्षत्रे दिनरात्रिविवर्जिते ।
अप्रमाणे गते काले मध्यं प्रापाम्भसो मुनिः ॥ ५२ ॥
तत्र सप्तर्षिभिर्जुष्टां मनुना च प्रजासृजा ।
नावं मत्स्यं च नापश्यन्मुह्यमानमना मुनिः[6] ॥ ५३ ॥
अथ विद्रुमवैदूर्यहेमशाखासहस्रिणः ।
उद्धतस्याम्भसो मध्यान्न्यग्रोधस्य महातरोः ॥ ५४ ॥
अङ्के पर्यङ्कबन्धेन स्थितं कमललोचनम् ।
ददर्श श्यामलं बालं दीप्ताभरणभूषितम् ॥ ५५ ॥ (युग्मम्)

---

१. 'कुतः' ख. २. 'आश्तृत' क; 'आदत' ख; 'स्मित' ग; 'आवृत' घ. ३. 'स्थिरम्' ग-घ. ४. 'तुङ्गोत्तुङ्ग' ख. ५. 'प्रसक्ते' ख. ६. 'तनुर्मुनिः' क-घ.

तत्समीपमवाप्तोऽथ स मुनिर्जलविह्वलः ।
निपीतः शिशुना तेन पयश्चुलकलीलया ॥ ९६ ॥
तस्योदरे सगिरि[1]गह्वरसागराणि
द्वीपापगानगरतीर्थतपोवनानि ।
पश्यन्नशेषभुवनान्यनिशं महर्षि-
र्नैवान्तमन्तरचरः क्वचिदाससाद ॥ ९७ ॥
प्रयाते विपुले काले नि[2]ष्क्रान्तस्तन्मुखान्मुनिः ।
अपश्यन्नाभिजाम्भोजे तस्य जातं प्रजासृजम् ॥ ९८ ॥
ब्रह्मणो मानसाज्जातैः प्रजापतिभि[3]रद्भुतः ।
मनुमुख्यैः कृतः प्राग्वत्सर्गः पुनरदृश्यत ॥ ९९ ॥
अथ बहुविधवर्णाकारचेष्टानुभावं
समविषमवि[4]भागं कर्मरेखावि[5]भागैः ।
नवविधिविहितं तद्विश्वनिर्माणचित्रं
भुवनभवनभित्तिव्यक्तसंसक्तमासीत् ॥ ६० ॥

इति श्रीव्यासदासापराख्यश्रीक्षेमेन्द्रविरचिते दशावतारचरिते मत्स्यावतारः प्रथमः ।

---

कूर्मावतारो द्वितीयः ।

दक्षस्ततः सर्गविधानदक्षः प्रजापतिः कान्तिविभूषिताशः ।
एकाधिकाः सर्वगुणोन्नतेभ्यः शतार्धसंख्याः प्रददौ स्वकन्याः ॥ १ ॥
ज्येष्ठामुमाख्यां भगवान्पिनाकी त्रयोदशान्याः किल कश्यपश्च ।
सप्ताधिकां विंशतिमत्रिपुत्रश्चन्द्रः प्रपेदे दशकं च धर्मः ॥ २ ॥
असूत देवानदितिः समस्तान्दैत्यान्दितिः कश्यपतः क्रमेण ।
कद्रूश्च नागान्गरुडारुणौ च खगाधिनाथौ विनताभिधाना ॥ ३ ॥
दनुस्तथा दानवसंघमुग्रं शुनां जनित्री सरमा बभूव ।
अन्यासु चाभूदथ कश्यपस्य हंसादिभेदेन विहंगसर्गः ॥ ४ ॥

---

१. 'गिरिसागरगह्वराणि' क-ख. २. 'निर्गतः' ग-घ. ३. 'अद्भुतैः' क-ख.
४. 'विरागं' ग. ५. 'विभावैः' क.

ततः सुराणां बलवत्तराणां दितेः सुतानां च भुजोर्जितानाम् ।
दुग्धोदधौ मन्दरभूधरेण सुधाप्तये मन्थमनोरथोऽभूत् ॥ ५ ॥
अथार्थितोऽभ्येत्य हिताय विष्णुः सुरासुरैः प्रीतिधृतैककार्यैः ।
मन्थक्षमं मन्दरमादरेण दलद्दरीकंदरमुज्जहार ॥ ६ ॥
तटे निविष्टेषु सुरासुरेषु तार्क्ष्यध्वजं क्षीरनिधिर्निरीक्ष्य ।
प्रक्षेप्तुमभ्युद्यतमद्रिराजं कृताञ्जलिर्विग्रहवानुवाच ॥ ७ ॥
चतुर्मुखः सृष्टिमिमां तनोषि विष्णुः स्थितिं पासि जगन्निवास ।
अन्ते हरः संहरसि त्रिलोकीमेकस्त्रिधा कारणभेदतस्त्वम् ॥ ८ ॥
भवद्भुजोत्क्षेपपरयेण मुक्तः स्वातन्त्र्यनिर्यन्त्रगतिः प्रमाथी ।
न सप्तपातालतलावभेदी क्वाप्येष विश्राम्यति शैलराजः ॥ ९ ॥
मन्थप्रयत्नो यदि सर्वथैव तच्चिन्त्यतामस्य धृतिर्महाद्रेः ।
वोढुं दृढोपक्रमकार्यभारं धृत्या विहीनः किल कः समर्थः ॥ १० ॥
यथार्थमाकर्ण्य सुधार्णवोक्तं युक्तं विनिश्चित्य तथेति विष्णुः ।
मन्थोद्यमे मन्दरधारणाय द्वितीयरूपेण बभूव कूर्मः ॥ ११ ॥
घनप्रमोदप्रतिमेन तेन विस्तारिणान्तः परिपूर्यमाणः ।
तरङ्गदोर्भिर्गगनाग्रगङ्गां क्षीरोदधिः क्षीब इवालिलिङ्ग ॥ १२ ॥
क्षिप्तस्य सावेगमथाच्युतेन सेहे भरं भूमिभृतः स कूर्मः ।
नवेश्वरस्येव विशृङ्खलस्य स्वकार्यसिद्ध्यै मतिमान्विकारम् ॥ १३ ॥
गिरा गरीयान्गरुडध्वजस्य वक्रक्रियां वासुकिरादधानः ।
आकर्षयोग्यं हृदयग्रहेण चक्रे गिरिं मुग्धमिवातिधूर्तः ॥ १४ ॥
अथाद्रिनाथे त्रिगुणानुबद्धं मन्थोत्थिता मन्थनकार्यसिद्ध्यै ।
भुजंगराजं जगृहुर्महेच्छाः पुच्छेन देवा वदनेन दैत्याः ॥ १५ ॥

अथ मथनविधाने क्षोभणेऽब्धेः प्रवृत्ते
भुवनभवनभङ्गभ्रान्तिहेतुर्बभूव ।

---

१. 'बलोर्जितानाम्' ग. २. 'दरत्' क-घ. ३. 'गतिः' क. ४. 'क्षोभने' क-ख-ग.

कठिनकमठपीठप्रष्ठपृष्ठप्रतिष्ठ-
प्रविलुठदचलेन्द्रोद्धातनिर्घातघोषः ॥ १६ ॥

ततः श्रियः स्फाटिकमण्डपाभं दन्तायतस्तम्भचतुष्टयाङ्कम् ।
मन्थोत्थमैरावणमिन्दुशुभ्रं द्विपेन्द्रमिन्द्राय ददावुपेन्द्रः ॥ १७ ॥

ससत्त्वमुच्चैःश्रवसं च सप्तिं निर्दोषमुत्साहगुणोपपन्नम् ।
प्रभाभिरामं सकलक्रियार्हं शूरप्रतापोदयसुप्रकाशम् ॥ १८ ॥

श्रमश्वसद्वासुकिस्रग्वि(क्वि)निर्यद्विषानलोल्काविकरालवक्त्रान् ।
विलोक्य दैत्यान्पुरतः पयोधेरथोद्ययौ हास इवामृतांशुः ॥ १९ ॥

स्वयं समादाय हरिर्हिमांशुं हरस्य चूडाभरणीचकार ।
गुणोचितस्थानसमर्पणेन पुष्णन्ति मानं महतां महान्तः ॥ २० ॥

अथोदितं कौस्तुभमब्जनाभः स्वभावहृद्यं हृदये बबन्ध ।
संपूरिताशं विषदप्रकाशैः कृतज्ञधीः साधुरिवोपकारम् ॥ २१ ॥

समुन्मिषद्विद्रुमहेमशाखासहस्रनिर्यन्नवरत्नपत्रः ।
जातः सुधाब्धेरथ पारिजातः स्वयं महेन्द्रोपवनं जगाम ॥ २२ ॥

अथोद्ययावुत्कटकालकूटः समीरसंमोहितदेवदैत्यः ।
दानोद्यतस्य स्वरसेन सिन्धोरत्यर्थमर्थार्थनयेव कोपः ॥ २३ ॥

विष्णोर्गिरा विश्वहितप्रवृत्तः शिवस्तदत्युग्रतरं निगीर्य ।
गौरीपरिष्वङ्गरसादिवाभूत्कपोलकालागुरुनीलकण्ठः ॥ २४ ॥

सुधाब्धिमध्यान्नवनीतमृद्वीमभ्युद्गतां कान्तितरङ्गिताङ्गीम् ।
ततः श्रियं श्रीरमणः प्रपेदे स्वयंवरक्षिप्तकटाक्षमालाम् ॥ २५ ॥

अथौषधीनां घनसौरभेण श्रमापहारी त्रिदशासुराणाम् ।
हर्षाय धन्वन्तरिराविरासीत्पीयूषपूर्णः कलशश्च पश्चात् ॥ २६ ॥

सुरापनीतद्विरदाश्वरत्नशशाङ्कलक्ष्म्यक्षमिणोऽतिजिह्माः ।
दिवौकसां मूलवधे प्रवृत्ता दैत्याः सुधां जह्रुरलक्ष्यवेगाः ॥ २७ ॥

---

१. 'प्रविष्ट' ग. २. 'प्रविचलत्' ग. ३. 'निर्घोष' घ. ४. 'सुप्रतापम्' ग. ५. 'सुधांशुं' ख-ग. ६. 'भव्यं' क-घ. ७. 'उद्धत' घ. ८. 'लक्ष्मीक्षमिणः' ख-ग.

पीयूषपूर्णं कलशं जवेन हृत्वा प्रयातेष्वसुरेषु विष्णुः ।
मन्थाचलेन्द्रं स्वपदे निधाय क्षणं प्रदध्यौ विबुधार्थसिद्धिम् ॥ २८ ॥
सुनिर्मलाङ्गीं सुरवैरिवामां वामाकृतिं कामकृपाणवल्लीम् ।
तनीयसीं विश्वतनुस्तनुं स्वां लावण्यलीलालहरीं चकार ॥ २९ ॥

तरलवलनलीलामिश्रनेत्रत्रिभागैः
श्रवणकुवलयस्य क्लैब्यमोपादयन्ती ।
अमृतहरणहेलादृप्तदैत्येश्वराणां
हृदयहरणसज्जा सा समीपं जगाम ॥ ३० ॥

शृङ्गारिणीं भगवतस्तनुमच्युतस्य
दृष्ट्वाद्भुतां त्रिभुवनाभिमतां बभूव ।
भव्यप्रभावविभवाय मनोभवस्य
तद्विभ्रमप्रभवभावभवोऽभिमानः ॥ ३१ ॥

मनसिजविजयोद्यद्वैजयन्तीविलासां
तुहिनकिरणहासां तां विलोक्यैव दैत्याः ।
झटिति गतविवेकाः शेकुरैश्वर्यमोहा-
दमृतमनृतलब्धं नैव पातुं न हातुम् ॥ ३२ ॥

संत्यज्य लब्धामृतपानतृष्णां ते प्रेमलब्धाधरपानलुब्धाः ।
गाढाभिलाषोष्णविषानुबन्धादूचुर्मिथः प्रस्खलितप्रतापाः ॥ ३३ ॥

पूर्णेन्दुर्वदने गतौ गजपतिर्लावण्यसारे सुधा
श्रीर्गात्रे मधुराधरेऽरुणमणिः संभाव्यते सुभ्रुवः ।
नीतं यत्त्रिदशैरहो सुमतिना भीतेन दुग्धाब्धिना
तत्सर्वं परितोषणाय वनिताव्याजेन नः प्रेषितम् ॥ ३४ ॥

तीव्रश्रमाप्तममृतं यदि बुद्धिमोहा-
देतत्कराम्बुरुहदत्तमिदं न पीतम् ।

---

१. 'निवेश्य' ग. २. 'उत्पादयन्ती' ख-ग. ३. 'ऐश्वर्यं' ग. ४. 'सुमनसा' ख-ग.

तत्किं वृथा दलितकंदरमन्दराद्रि-
मन्थैरुपद्रवशतैः परिखेदितोऽब्धिः ॥ ३५ ॥

इत्युक्त्वामृतपूर्णरत्नकलशं तस्यै ददुर्दानवाः
साप्यादाय तमम्बरेण सहसा धामामराणां ययौ ।
अन्यायेन यदर्जितं कथमिह स्वास्थ्येन तद्भुज्यते
यत्नात्तोऽपि पलायते विहगवन्मूढस्य हस्तान्निधिः ॥ ३६ ॥

प्रत्याहृतं तत्कमलाधवेन पातुं प्रवृत्तेष्वमृतं सुरेषु ।
विवेश राहुः सुररूपगूढस्तन्मध्यमास्वादविशेषलुब्धः ॥ ३७ ॥

जिह्वाग्रलग्नं रससारमाद्यमास्वादयन्विस्मयलोलवक्त्रः ।
राहुर्मुहुः कातरतामवाप्तः संसूचितः सोमदिवाकराभ्याम् ॥ ३८ ॥

अर्धग्रोत्कार(?)रावप्रविलुठदमृते कण्ठपीठेऽथ राहो-
र्वक्त्रस्य क्रूरकोपात्क्रमरहिततया चक्रिचक्रेण कृत्ते ।
निर्यान्ती व्यक्तरक्तस्रुतिभरशबला शेषपीयूषधारा
हाराग्रालीनपीनारुणमणिकिरणश्रेणिशङ्कां चकार ॥ ३९ ॥

इति स भगवान्विष्णुः कूर्माकृतिर्धृतभूधरः
सुरहितविधौ बद्धश्रद्धः सुधां विदधेऽम्बुधेः ।
अविचलतया संसक्तानां परोपकृतिव्रते
भवति महतां स्फीतोत्साहे मनागपि न श्रमः ॥ ४० ॥

इति श्रीव्यासदासापराख्यश्रीक्षेमेन्द्रविरचिते दशावतारचरिते कूर्मावतारो द्वितीयः ।

---

वराहावतारस्तृतीयः ।

अथामृते विष्णुहृते दितेः सुतः कृती हिरण्याक्ष इति प्रभावभूः ।
तपःश्रिया सर्वजगज्जयोर्जितामवाप भूतिं परिभूतवासवः ॥ १ ॥
कदाचिदास्थानसभाभुवं श्रितः स विप्रचित्तिद्रुमभौमतारकान् ।
निसुम्भसुम्भान्यकजम्भशम्बरान्महासुरान्वृत्रमुखानभाषत ॥ २ ॥

---

१. 'यत्नाप्तः' ग. २. 'अर्धाग्रोत्कार' ग. ३. 'शंभरान्' ग-घ.

अपि श्रुतं दृष्टमदृष्टमीदृशं सुरैः कृतं वक्रतया कुकर्म यत् ।
न मर्मसंलग्नविषोक्षितेषुवत्करोत्यहो दुःसहदाहलाघवम् ॥ ३ ॥
न लज्जते सज्जनवर्जनीयया भुजंगवक्रक्रिययापि दुर्जनः ।
धियं कुमायासमयाभिचारिणीं विदग्धतामेव हि मन्यते खलः ॥ ४ ॥
रणाग्रभीतिर्लिखितेव चक्रिणा दिगन्तपट्टेष्वयशोमषीभरैः ।
भुजाभिमानाभरणः करोति किं सुधापहारं वनिताकृतिच्छलात् ॥ ५ ॥
निपीय पीयूषमुपायमायया जराक्षयादक्षयकायतां गताः ।
ध्रुवं समुत्सारितसंपदः सुराः सदैव निन्दन्त्यतिदीर्घजीवितम् ॥ ६ ॥
अदानभोगेन धनोदयेन किं मदस्पृशा द्वेषजुषा श्रुतेन किम् ।
सदम्भसंभारवता व्रतेन किं विपद्विमानेन कुजीवितेन किम् ॥ ७ ॥
यस्मिन्नूर्जिततेजसा निजभुजोत्साहार्जिताः संपदो
भुज्यन्तेऽल्पतरोऽप्यनल्पसुकृतैः पूज्यः स जीवक्षणः ।
याच्ञाक्लिष्टनिकृष्टचेष्टमनिशं कष्टेऽप्यपुष्टाशनं
काकानामिव पुण्यपिण्डकभुजां कस्येष्टमायुश्चिरम् ॥ ८ ॥
विवासिताः स्वर्गपदान्मयाधुना सुधानिबद्धायतजीवितद्विषः ।
व्रतानि देवाः कुगतिक्षताः क्षितौ चरन्ति तीर्थेषु तपोवनेषु च ॥ ९ ॥
घनावमानाशनिशातितौजसां वियोगिनां दैवनिपीतसंपदाम् ।
प्रतिक्रियाहीनरिपुप्रणामिनां प्रजायतेऽतीव तपोवनादरः ॥ १० ॥
रिपोर्गतस्यापि शरीरशेषतां न नाम युक्तं क्षणमप्युपेक्षणम् ।
अतः सुराणां व्यसनप्रवासिनां समूलनिर्मूलनकर्म कुर्महे ॥ ११ ॥
इति स्थिरान्तर्गतगूढमन्युना यथार्थमुक्तं सुरवैरिभूभृता ।
निशम्य दैत्याः प्रमदात्तमूचिरे सुधापहारोग्रनिकारदारिताः ॥ १२ ॥
वयं त्वदाज्ञापरतन्त्रवृत्तयः पराभवं शत्रुकृतं सहामहे ।
रिपुक्षमापङ्ककलङ्कितं यशो न नाकिकान्ताश्रुजलैः पुनीमहे ॥ १३ ॥

१. 'क्रियं' ख-ग. २. 'कुमारक्रियया' क-ख-ग. ३. 'भित्तिः' क-ख. ४. 'कष्टेष्ट' क-ख-ग. ५. 'चान्य' ग.

स कुञ्जरेन्द्रः स हयः स कौस्तुभः प्रसह्य सा श्रीः स शशी स पादपः।
हृताः सुरैरेव विलोकिताः पुरः प्रणष्टचेष्टैर्लिखितैरिवासुरैः॥ १४॥
अमर्षिभिर्मर्षित एष दुःसहः सुधाशया दैत्यवरैर्व्यतिक्रमः।
न सापि पीता बत निष्फलोदयः कृतोऽतिलोभादभिमानविक्रयः॥१५॥
पुनः पुनः किं विपुलं विचार्यते समीहितं हन्त हिते विधीयताम्।
भवत्यभावप्रभवे दिवौकसां न नाम नामापि यथा जगत्त्रये॥ १६॥
इति प्रवृद्धोद्धतमन्युमूर्छितैः सुरारिभिः क्रूरतरैरुदाहृतम्।
प्रियं समाकर्ण्य हिरण्यलोचनः प्रमोददिग्धः सचिवानभाषत॥ १७॥
अतीव युक्तं मतमायतिक्षमं भवद्भिरुक्तं हितयुक्तमुत्तमम्।
विनाशसज्जः प्रथमं दिवौकसां क्षितिं स्थितिं देहधृतिं हराम्यहम्॥१८॥
ममाज्ञया संप्रति सैन्यनायकाः प्रविश्य पातालतलं बलाधिकाः।
क्षितिं समाक्षिप्य नयन्त्वदृश्यतामसंशयं संक्षय एव विद्विषाम्॥१९॥
इति प्रभोर्भ्रूभ्रमभीमशासनं निशम्य दैत्याः पृथिवीप्रवासनम्।
समुच्चलन्तश्चरणैः प्रचक्रिरे क्षितिं क्षयत्रासविसंस्थुलामिव॥ २०॥

अथ दितिसुतसेना मज्यमानाननानां
स्थितिविदलनलज्जां दिग्गजानां दिशन्ती।
धरणिहरणसज्जा मज्जयन्ती दिगन्ता-
नविशदतिविशालोत्तालपातालमूलम्॥ २१॥

क्षितौ हृतायां दितिजैः सदानवैर्जगत्सु जाते स्थितिलोपविप्लवे।
भुवं समुद्धर्तुमथाच्युतः स्वयं वराहवक्त्रः प्रविवेश भूतलम्॥ २२॥
स राजवर्ताचलतुल्यविग्रहः सशङ्खचक्रः शशिसूर्यवानिव।
अकालसंध्यामिव पिङ्गलोचनः प्रभां बभार क्षयलक्षणां द्विषाम्॥२३॥
स सप्तपातालतलान्तकोटरे निसूदितामुन्मददानवैर्महीम्।
समुज्जहाराम्बुविहारलीलया तनीयसीं शेवलवल्लरीमिव॥ २४॥

१. 'अमर्षितैः' ख. २. 'एव' ग-घ. ३. 'लोकात्' ख. ४. 'प्रबुद्ध' ग-घ. ५. 'असंशयः' ग. ६. 'प्रशासनम्' ग. ७. नीलवर्णो रत्नविशेषो राजवर्तः. ८. 'समस्त' ग. ९. 'दुर्मद' ख.

पोत्रप्रान्तसमुद्धृता भगवतः क्रोडाकृतेः श्यामला
दंष्ट्राग्रे शशिनीव लक्ष्मलहरीशोभां दिशन्ती क्षणम् ।
[1]वक्रालोकनकम्पभीतितरला स्वेदाम्बु[2]तिम्यत्तनु-
र्लीलापल्वलमुस्तपत्रलतिकालीलामुवाह क्षितिः ॥ २५ ॥

अथाययौ भूमिसमुद्धृतिक्रुधा सुधापहारस्मृतिवर्धमानया ।
[3]भरेण दैत्याधिपतिश्चलच्चमूरजःपटग्रस्तसमस्तवासरः ॥ २६ ॥

ततस्तदुत्सृष्टशराश्ममुद्गरत्रिशूलपाशाङ्कुशशक्तितोमरैः ।
बभूव देवः परिपूरिताकृतिर्महाभ्रवर्षैरिव निश्चलोऽचलः ॥ २७ ॥

आशाकाशप्रसृतवपुषा व्याप्तसप्ताब्धिलोकः
स्तोकारम्भक्षुभितभुवनभ्रंशशङ्कानिलीनः ।
[4]स्वस्थां धृत्वा स्थिरनिजपदे क्ष्मां हिरण्याक्षमुग्रं
क्रोडीकृत्य प्रसभमवधीत्क्रीडया क्रोडराजः ॥ २८ ॥

इति स भगवान्विष्णुर्जिष्णुर्जगत्कुशलक्रिया-
प्रणिहितमतिः कृत्वा विश्वं समुद्धृतकण्टकम् ।
निजनिजपदे [5]धृत्वा देवाञ्जगत्त्रितयस्थितिं
विभुरभिनवोत्साहां चक्रे पुनः प्रथमामिव ॥ २९ ॥

इति श्रीव्यासदासापराख्यश्रीक्षेमेन्द्रविरचिते दशावतारचरिते वराहावतारस्तृतीयः ।

---

## नरसिंहावतारश्चतुर्थः ।

हते महावराहेण हिरण्याक्षे क्षितिद्रुहि ।
हिरण्यकशिपुः श्रीमान[6]भवत्तत्सुतोऽधिकः ॥ १ ॥

नो ननाम रणे यस्य क्षणाद्विश्वक्षयं विना ।
दोर्दण्डपीडनक्रीडाव्रीडाकुण्डलितं धनुः ॥ २ ॥

प्रतापकेसरी यस्य निःशेषीकृतविद्विषः ।
अलब्धयुद्धः सुष्वाप जगद्गिरिगुहागृहे ॥ ३ ॥

---

१. 'वक्र' ग. २. 'ताम्यत्' ख. ३. 'बलेन' घ. ४. 'सुस्थां' ग. ५. 'कृत्वा' घ. ६. 'अधिकस्तत्सुतोऽभवत्' ग.

स जम्भवृत्रनमुचिप्रमुखैर्दैत्यदानवैः ।
हेमसिंहासनासीनः सह भेजे सभाभुवम् ॥ ४ ॥
प्रणमद्दैत्यसामन्तप्रतिबिम्बभरक्षमे ।
विपुले[1] रत्नपर्यङ्के विन्यस्तचरणाम्बुजः ॥ ५ ॥ (युग्मम्)
पार्श्वे हठहृतामर्त्यतरुणीचामरानिलैः ।
प्राणेशविरहोच्छ्वासैरिव लोलांशुकाञ्चलः ॥ ६ ॥
तस्याग्रे विग्रहग्रस्तसमस्तसुरसंपदः ।
तेजसा[2] मुद्रितः कश्चिन्न वक्तुमभवद्विभुः[3] ॥ ७ ॥
तस्मिन्निःशब्दसंचारे दैत्यवृद्धः सभातले ।
प्राह राहुः शिरःशेषः सुरवैरं वहन्मुखे ॥ ८ ॥
दैत्याधिनाथ धन्योऽसि युधि येनासिधारया ।
क्षमापङ्ककलङ्काङ्कं कुलस्य क्षालितं यशः ॥ ९ ॥
सुरापकारशल्यानि भ्रूभेदेन तवाधुना ।
कामं कङ्कमुखेनेव हृदयादुद्धृतानि नः ॥ १० ॥
पूज्यं जन्म प्रथितयशसस्तस्य माहात्म्यपूतं
मानस्तस्यामरगिरिगुरुर्वर्धते निष्प्रमाणः ।
बद्धस्तेन स्थिरगुणकथाहेतुरौचित्यसेतु-[4]
र्यस्योन्नत्या कुलमविकलं याति सर्वोन्नतत्वम् ॥ ११ ॥
अल्पागसां वृथास्माभिः कृता हिंसा दिवौकसाम् ।
विष्णुर्मूलं विकाराणामवलेपादुपेक्षितः ॥ १२ ॥
तन्वी मूर्तिः कुसुमकलिकाकोमला सा च वाणी
वैक्रं[5] सौम्यं हृदयमदयं दूषितं चेष्टितं च ।
वैदग्ध्यं तद्वत मधुरिपोर्मायया मौग्ध्यदिग्धं
वामामूर्तेरमृतहरणे[6] हन्त किं विस्मृतं वः ॥ १३ ॥

---

१. 'विमले' ख. २. 'ओजसा' ख. ३. 'प्रभुः' ग-घ. ४. 'सेतुरौचित्यहेतुः' क-ग.
५. 'वक्रक्रूरं हृदयं' ग. ६. 'रामामूर्तेः' ग.

यश्चमत्कारविरहान्न सतां स्नेहवैरयोः ।
तेन तुष्टेन रुष्टेन मित्रारिविफलेन किम् ॥ १४ ॥
दैत्येश्वरे हिरण्याक्षे क्षपिते तार्क्ष्यलक्ष्मणा ।
शृङ्गभङ्गः समुत्तुङ्गो दैत्यक्षितिभृतां कृतः ॥ १५ ॥
साधारोदधिमन्थोत्थां लक्ष्मीं वक्षसि कुर्वता ।
तेनाबलानामस्माकं स्त्रीत्वमेवोपपादितम् ॥ १६ ॥
लक्ष्मीकौस्तुभपारिजातहरणं स्त्रीमायया वञ्चनं
मत्कण्ठे कठिनेऽमृतस्य लुठतो विज्ञाय चक्रक्रिया ।
दैत्येन्द्रैरवलेपविद्रुतमदैर्दैवेन वा मुद्रितै-[1]
र्वैकुण्ठस्य शठस्य कुण्ठमतिभिश्चिन्त्यं न तच्चिन्तितम्[2] ॥१७॥
अधुना दानवपते खड्गपातपवित्रितः[3] ।
पितुर्विष्णुवधश्रद्धाश्राद्धकालो विधीयताम्[4] ॥ १८ ॥
इत्युक्ते राहुणा स्पष्टं दैत्याः क्लिष्टमुखत्विषः ।
बभूवुर्लक्ष्यवैलक्ष्याः प्रेक्षमाणाः क्षणं क्षितिम् ॥ १९ ॥
अमानमौनमूकेषु[5] दानवेष्वभिमानिषु ।
उवाच तारकः कृत्वा राहोरभिमुखं मुखम् ॥ २० ॥
साभिमानमसंभाव्यमौचित्यच्युतमप्रियम् ।
दुःखावमानदीनं वा न वदन्ति गुणोन्नताः ॥ २१ ॥
सर्वंकषेण कालेन दैत्येन्द्रे कवलीकृते ।
किं मिथ्याकारणत्वेन नीयते विष्णुरुन्नतिम् ॥ २२ ॥
कल्पान्ते क्षिप्यते येन सुमेरुः पांसुलीलया ।
विलम्बं कुरुते तस्य कः कालस्य बलीयसः ॥ २३ ॥
यस्य त्रैलोक्यभर्तुः सुरपतियशसां हर्तुराश्चर्यकर्तुः
कोटीनां षण्णवत्या सुगणितवयसो वर्षसंख्या बभूव ।

---

१. 'मुद्रितपदैः' ख-ग. २. 'संचिन्तितम्' ख-ग. ३. 'पवित्रितम्' ख-ग. ४. 'श्राद्धकालाय दीयताम्' ख-ग. ५. 'मूढेषु' घ.

निःशङ्काश्वासलीलालससरलमतेरङ्कसुप्तस्य मैत्र्या-
श्चित्रं तस्यापि कालः कवलनकलनातीतविघ्नः कृतघ्नः ॥ २४ ॥

दैवमेव वधे तस्य कारणं दैत्यभूभृतः ।
हरिर्हन्ति हिरण्याक्षमिति किं केन[1] संगतम्[2] ॥ २५ ॥

निर्यन्त्रणं स्वतन्त्रस्य विचित्रचरितं विधेः ।
किं पात्यते न कीटेन शतशाखो वनस्पतिः ॥ २६ ॥

बलवान्दुर्बलं हन्तीत्येष नास्त्येव निश्चयः ।
दीपं हन्ति पतंगोऽपि पन्नगं च पिपीलकः ॥ २७ ॥

भीरुर्जयति सङ्ग्रामे याति[3] वीरः क्षयं क्षणात् ।
एवंविधा एव भवे भवन्ति भवितव्यताः ॥ २८ ॥

दैत्येन्द्रस्यारिसंहारे प्रेरणा क्वोपयुज्यते ।
प्रेर्यते दन्तिदलने कानने केन केसरी ॥ २९ ॥

राहो निन्दापदेशेन कृता शत्रोः स्तुतिस्त्वया ।
न वेत्सि हृदयाभावादनौचित्योक्तिलाघवम् ॥ ३० ॥

इत्युक्ते तारकेणाप्तजीविनामिव मानिनाम् ।
साधुसाध्विति दैत्यानां निश्चेरुर्युगपद्गिरः ॥ ३१ ॥

अथ धर्ममतिः प्राह हिरण्यकशिपोः सुतः ।
प्रह्लादः पितुरासन्ने यौवराज्यासने स्थितः ॥ ३२॥

तात तिष्ठत्सु वृद्धेषु षाड्गुण्यज्ञानमानिषु ।
मद्विधानामिदं वक्तुं युक्तमल्पधियां कथम् ॥ ३३ ॥

प्रस्थितानाममार्गेण निपातभयशङ्कया ।
दूराद्वारणनादेन येनकेनचिदुच्यते ॥ ३४ ॥

अयुक्तं यद्भगवतो विष्णोर्निन्दाभिनन्द्यते ।
अशस्तं वाङ्मयं पापमभ्यस्तं स्वस्तिनाशनम् ॥ ३५ ॥

यस्य सद्गुणनिन्दायां श्रद्धया वाक्प्रवर्तते ।
सत्क्षेत्रोप्तमपर्याप्तमयशस्तस्य जायते ॥ ३६ ॥

---

१. 'तेन' ग. २. 'संश्रुतम्' ख. ३. 'यान्ति वीराः' ख.

विष्णोर्जगन्निवासस्य नैव द्वेष्योऽस्ति न प्रियः ।
दोषे वैरं गुणे प्रीतिर्निसर्गेण जगद्गुरोः ॥ ३७ ॥
गुणहीना वयं नूनं त्रिदशा गुणशालिनः ।
हरिः कुतोऽन्यथास्मासु विमुखस्तेषु संमुखः ॥ ३८ ॥
प्रयत्नः स्वगुणाधाने येन बुद्धिमता कृतः ।
भूतये प्रणतास्तस्य मित्रतां यान्ति शत्रवः ॥ ३९ ॥
मित्रसृष्टिर्न भिन्नास्ति शत्रुजातिर्न भि[1]द्यते ।
गुणेन जायते मित्रं दोषेणोत्[2]पद्यते रिपुः ॥ ४० ॥
हिंसाविरहिता चेष्टा वाणी विनयकोमला ।
यस्यावैरं मनस्तस्य शत्रुशून्या दिशो दश ॥ ४१ ॥
न तु विश्वाकृतेर्विष्णोः कर्तुं शक्या प्रतिक्रिया ।
यस्योदरदरीकोणे लीना शेते जगत्त्रयी ॥ ४२ ॥

आशाकाशावकाशप्रविसृतवपुषा व्याप्तनिः[3]शेषविश्वः
श्वासोल्लासावहेलातुलतरलतरोत्तालकल्लोलभाग्भिः ।
शुण्डोच्चण्डाभिघातस्फुटितमपि पुनः [4]स्फाटिकस्फारवा[5]र्भि-
श्चक्रे मत्स्यावतारस्त्रिभुवनमिव यः कस्य देवः स जेयः ॥ ४३ ॥

यस्याकरोद्विकचनाभिभवाब्जकोषे
सामस्वरेण विदधद्भ्रमराभिशङ्काम् ।
यज्ञोपवीतमुरसा धवलं दधानः
संलग्ननाल[6]तनुतन्तुरिवाब्जयोनिः ॥ ४४ ॥

दृष्ट्वैवावर्तमानं घनभुवनगणं जातलोकानुकम्पः
संपन्ने सर्गबन्धे स्थितिधृतिदलनातङ्कमाशङ्कमानः ।
पृष्ठे ब्रह्माण्डमन्यत्पृथुतरमकरोत्कूर्मरूपः कवाटं
यस्तस्याचिन्त्यशक्तेर्वदति मितमतिः कः स्तुतिं कश्च निन्दाम् ॥ ४५ ॥

---

१. 'विद्यते' क-ख-ग-घ. २. 'जायते' ख-ग. ३. 'सप्ताब्धिलोकः' क. ४. 'स्फाटिकं' क-ग. ५. 'वाग्भिः' ग. ६. 'तलतन्तु' क-ग.

[1]परोक्षेऽधोक्षजाक्षेपमधिक्षेपविवक्षया ।
[2]राहोर्व्याहरतो देहविरहात्तस्य शोभते ॥ ४६ ॥
न वैरे वाच्यता राहोर्यस्याद्यापि न शाम्यति ।
कण्ठे कठिनवैकुण्ठचक्र[3]धारोद्धतव्यथा ॥ ४७ ॥
[4]आक्रान्तिभरवक्रेण क्रूरचक्रेऽस्य चक्रिणः ।
किं दृष्टं नष्टचेष्टेन विश्वरूपं न राहुणा ॥ ४८ ॥
उचितं दैत्यवीरेण तारकेण महात्मना ।
कथितं यत्स कालेन दलितो मत्पितामहः ॥ ४९ ॥
कालश्च भगवान्विष्णुर्विश्वव्यापी सनातनः ।
अनाद्यन्तस्य यस्यान्तर्यान्ति कल्पान्तकोटयः ॥ ५० ॥
पूज्यतां विनै[5]याद्विष्णुस्त्यज्यतां मोहदुर्ग्रहः ।
रक्ष्यतां यक्षिणी (?) लक्ष्मीः स्वहिते धीर्निधीयताम् ॥ ५१ ॥
मूर्खमन्त्रः खलप्रीतिः पथ्यद्वेषः प्रमादिता ।
प्रभविष्णुविरोधश्च विधिवै[6]मुख्यलक्षणम् ॥ ५२ ॥
प्रह्लादगदितं श्रुत्वा निःशश्वासासुरेश्वरः ।
[7]अङ्कुशाकर्षकषणक्लेशी [8]वन्य इव द्विपः ॥ ५३ ॥
सोऽवदद्भुत दैत्यानां दुर्निमित्तमुपस्थितम् ।
यदादिशति वृद्धानामुपदेशमयं शिशुः ॥ ५४ ॥
कुलस्यान्तनिमित्तेन स्त्रीणां दुश्चरितेन वा ।
पापशापेन वा नूनं जायन्ते कुलपांसनाः ॥ ५५ ॥
स्वकुलत्यागनिःस्नेहाश्चपला मलिनाः खलाः ।
कोकिला इव कुर्वन्ति परपक्षसमाश्रयम् ॥ ५६ ॥
कुलक्रमागतेयं श्रीः प्रह्लादाय न रोचते ।
यस्य वन्दिपदे शत्रोः स्तोत्राङ्के रमते मतिः ॥ ५७ ॥

---

१. 'परोक्षाधोक्षजा' क-घ. २. 'राहोरतितरां' क-ख. ३. 'धारापथ' ख, 'धारापृथु' ग. ४. 'आक्रान्ततरवक्रेण क्रूरचक्रेण चक्रिणा' ग-घ. ५. 'विनयी' क-ख-ग. ६. 'वैधुर्य' ग. ७. 'अङ्कुशाकर्षणक्लेशी वने' ग. ८. 'नव इव' ग-घ.

तेजोजीवदरिद्राणां दैन्यम्लानयशस्त्विषाम् ।
जायते शत्रुषु[१] त्रासात्क्लीबानामिव संनतिः[२] ॥ ५८ ॥
वंशक्षयक्षमः कृष्णवर्त्मा भवति दारुणः ।
दाहाय जनकस्यादौ टींकार[३]मुखरः खलः ॥ ५९ ॥
सेक्तारं जनकं त्यक्त्वा परेषां वेश्मसंश्रयाः ।
वक्रवृक्षाः कुजन्मानः फलन्ति च नमन्ति च ॥ ६० ॥
कुठारिकेण येनैव च्छिन्नमूलः कृतस्तरुः ।
तस्यैव निर्मान[४]तया मूढः पतति पादयोः ॥ ६१ ॥
कस्य प्रह्लाद मत्स्यादिमहाकारविकारिणः ।
विष्णोः स्तुत्या करोषि त्वमेताः शिशुविभीषिकाः ॥ ६२ ॥
भवन्त्येव भवे स्थूलाः सूक्ष्माश्चान्ये किमद्भुतम् ।
ब्रह्माण्डपरमाणुभ्यां दर्शिता स्थूलसूक्ष्मता ॥ ६३ ॥
अब्धौ धूमसमूहतुच्छतनवस्तोयं पिबन्त्यम्बुदा
　पीत्वालम्बनशून्यमम्बरतलं व्याप्यातताः[५] शेरते ।
तद्गर्भाम्भसि विस्फुरन्ति दहनोद्गारोद्गता विद्युतः
　संसारे किमभित्तिचित्ररुचिरे नालोक्यते कौतुकम् ॥ ६४ ॥
वृत्रे शत्रुहरे मधौ जयनिधौ सुम्भासुरे भासुरे
　मायाधाम्नि मये रणार्णवयशःसंतारके[६] तारके ।
जम्भे स्तम्भितलोकनाथपृतने रुद्धाम्बरे शम्बरे
　वातापिन्यपि तापने प्रतपति स्वस्तिच्युतः क्वाच्युतः[७] ॥ ६५ ॥
उपदेशस्त्वया[८] प्राप्तः कस्य मूर्खगुरोर्मुखात् ।
जलशायी जलपतिर्दैवतं यस्य सोऽच्युतः ॥ ६६ ॥
विचार्यमाणस्तस्यास्ति गुणलेशो न कश्चन ।
एतावदेव जानेऽहं दम्भसिद्धोऽयमच्युतः ॥ ६७ ॥

---

१. 'शत्रुसंत्रासात्' ग. २. 'संततिः' ख-ग. ३. 'झांकार' ग. ४. 'निर्माणतया' क-ख-घ. ५. 'व्याप्य ततः' ख-घ. ६. 'संतानके' घ. ७. 'कोच्युतः' ग-घ. ८. 'त्वयावाप्तः' घ.

ध्यानं नेत्रनिमीलनं विहसनं भ्रूकुञ्चनं घूर्णनं
शूत्कारश्वसनं विमूढ[1]गणनं शिष्यस्पृहोल्लासनम् ।
मूर्खत्रासनमुन्नतासनमतिप्रह्वस्य पादार्पणं
धूर्तानां स्तुतिभूतिसूतिसदनं दम्भप्रभावादिदम् ॥ ६८ ॥

विश्वव्यापी स चेद्देवः सर्वस्यात्मा हृदि स्थितः ।
न तद्विरहितं किंचिदचरेषु चरेषु च ॥ ६९ ॥

योऽयं मरकतस्तम्भः सभायां मे पुरःस्थितः ।
अस्यान्तःस्थं न पश्यामि दुष्पुत्र तव दैवतम् ॥ ७० ॥

इत्युक्ते [2]दितिजेन्द्रेण सहसा महसां निधिः ।
दीर्णान्मरकतस्तम्भान्निर्ययौ नरकेसरी ॥ ७१ ॥

सुवर्णशुक्तिद्वन्द्वाभं बिभ्राणः श्रवणद्व[3]यम् ।
अन्तःस्फुरत्[4]कोपाग्निनिर्यज्ज्वालायुगोपमम् ॥ ७२ ॥

सितः केसरभारोऽस्य बभौ स्कन्धद्वयाश्रयः ।
मेरुशृङ्गयुगासङ्गिशुभ्राभ्र[5]वलयप्रभः ॥ ७३ ॥

जृम्भमाणस्य तस्यास्ये ललास रसना मुहुः ।
कल्पान्तानललेखेव हेमाचलगुहागृहे ॥ ७४ ॥

नखास्तस्य बभुर्भीतिभग्नैणाङ्ककलोज्ज्वलाः ।
दैत्यासृक्पानसंनद्धमृत्युस्फटिकशुक्तयः ॥ ७५ ॥

तस्य रौद्रतयोन्निद्ररोमाञ्चोत्कटकण्टकाः ।
असूचयन्बहिर्घोरक्रौर्यकर्कशतामिव ॥ ७६ ॥

दैत्यकल्पान्तकालेन द्वादशार्कोदयत्विषा ।
तत्तेजसा व्यदीर्यन्त तेजांसि च तमांसि च ॥ ७७ ॥

करालकेसरिमुखं दृष्ट्वा दितिजकुञ्जराः ।
[6]ते भग्नवदनोत्साहा ययुर्मददरिद्रताम् ॥ ७८ ॥

---

१. 'गहनं' घ. २. 'दनुजेन्द्रेण' ख, 'दैत्यराजेन' ग. ३. 'द्वयी' क-घ. ४. 'प्रताप' क-ग. ५. 'विलसत्' ग. ६. 'तं' क-घ.

तद्दर्शनाद्भुताक्रान्तः किमप्यातङ्कशङ्कितः ।
आसनादुच्चलन्नूचे हिरण्यकशिपुः श्वसन् ॥ ७९ ॥

नायं सिंहो न चायं पुरुषवपुरहो कोऽप्यपूर्वप्रकारः
क्षिप्रोपेक्षाक्षमास्मिन्नहि नहि तरसा गृह्यतां गृह्यतां भोः ।
आस्तां सज्जोऽहमस्य स्वयमिह दमनायेत्युदीर्यासुरेन्द्र-
स्तं चक्रे शस्त्रवृष्ट्या निचितमुपचितोदञ्चिरोमाञ्चपूर्णम् ॥ ८० ॥

व्याप्तः शस्त्रास्त्रवर्षेण हेलोन्मीलितलोचनः ।
हरिर्दैत्येन्द्रमादाय विस्फुरन्तमपीडयत् ॥ ८१ ॥
उत्तानमङ्के विन्यस्य पिङ्गभ्रूभङ्गया दृशा ।
अकालसंध्यामसृजन्नृहरिस्तं विलोकयन् ॥ ८२ ॥
दैत्येन्द्रहाररत्नाङ्के स्ववक्त्रं प्रतिबिम्बितम् ।
करालक्रूरमालोक्य सोऽभूदुद्भूतविस्मयः ॥ ८३ ॥
अयं मां योद्धुमायात इतीव हसितच्छलात् ।
दैत्यवक्षसि चिक्षेप हरिर्नखपरम्पराम् ॥ ८४ ॥

तस्योग्रसिंहनखशुक्तिशिखावखात-
वक्षःस्थलव्रणगुहाप्रतिशब्दधीरः ।
भोस्तिष्ठ तिष्ठ चपल क्व गमिष्यसीति
कण्ठे स्वनः सह ययावसुभिः समाप्तिम् ॥ ८५ ॥

विदीर्णे दैत्येन्द्रे खरनखरदानैर्नरहरे-
श्चकाशे रक्ताक्तत्रुटिततहाराग्रगलितः ।
शुकीतुण्डाघातव्यतिकरदलद्दाडिमरुचि-
र्व्रजद्भिर्जीवांशैःश्रित इव लुठन्मौक्तिकभरः ॥ ८६ ॥

वृत्रश्चित्रार्पिताभस्तिमिततमनमत्तारकस्तारकोऽपि
ध्वस्तः स्तम्भेन जम्भः प्रणिहितनयनः शम्बरोऽप्यम्बराग्रे ।

१ 'क्षुद्रोपेक्षा' ग-घ. २. 'इति' ख. ३. 'व्यलोकयत्' क-ग-घ. ४. 'रत्नागे' ख-ग. ५. 'तिमिरमित' ख, 'स्तिमितामितामित' घ.

वातापिः सानुतापः क्षतधृतिरभवन्निर्ममः कालनेमि-
दैत्येन्द्रे रौद्रवृत्त्या नरहरिदलिते विप्रचित्तिर्विचित्तः ॥ ८७ ॥
हत्वा हिरण्यकशिपुं हरिर्हारिणलीलया ।
हर्षेण दर्शनायातान्ददर्श त्रिदशान्पुरः ॥ ८८ ॥
भीभग्नैरावणाग्रात्सुरपतिरचलद्विद्रुताश्वश्च भानु-
स्त्रस्तं तत्याज वाहं महिषमपि यमश्चन्द्रमा निर्मृगोऽभूत् ।
पार्श्वे वक्त्रं विविघ्नं गणपतिरकरोदित्यमर्त्योत्तमाना-
मग्रे तस्योग्रमूर्तेः स्थगितगतिरभूत्संभ्रमः सप्रहर्षः ॥ ८९ ॥
इति स भगवान्कृत्वा विष्णुर्जगज्जनितोदयं
कुशलमचलं प्रह्लादाय प्रदाय सहायुषा ।
निजनिजपदे देवान्धृत्वा स्थिरस्थितिपालने
दयितमगमत्सौम्यां मूर्तिं विधाय सुधाम्बुधिम् ॥ ९० ॥

इति श्रीव्यासदासापराख्यश्रीक्षेमेन्द्रविरचिते दशावतारचरिते नरसिंहावतारश्चतुर्थः ।

---

वामनावतारः पञ्चमः ।

भक्त्याभिषिक्तः प्रह्लादः स्वयं देवेन विष्णुना ।
विदधे धर्ममर्यादां दितिजानां विभूतये ॥ १ ॥
विकासहेतुर्गुणिनां मित्राभ्युदयकारिणः ।
प्रभातस्येव तस्य श्रीर्निर्दोषाभिमताभवत् ॥ २ ॥
कालेन दैत्यमातङ्गाः संजातनिजदुर्मदाः ।
तच्छासनाङ्कुशाकर्षक्लेशलेशं न सेहिरे ॥ ३ ॥
राज्येऽभिषिच्य प्रह्लादः पात्रं पुत्रं विरोचनम् ।
भेजे संतोषसाम्राज्ये निःसंख्यसुखसंपदम् ॥ ४ ॥
कालेनासुरराज्येऽथ दैत्यदोषासहिष्णुना ।
त्यक्ते विरोचनेनापि तत्सुतोऽभूद्विभुर्बलिः ॥ ५ ॥

---

१. 'ह्यारिण' ख. २. 'भीभग्नैरावणाग्रः' ग-घ. ३. 'धृत्वा देवान्' ख-घ. ४. 'निःसङ्ग' ग.

विक्रमप्रभवा संपत्संपन्नाभिनवोदया ।
सहस्रगुणतामेति धर्मेणाप्यायिता यदि ॥ ६ ॥
मार्गणापूरणासक्तिविस्तीर्णगुणसंततिः ।
स्वचापतुल्यस्त्रैलोक्यमजयल्लीलया बलिः ॥ ७ ॥
ससत्त्वतातिगाम्भीर्यं तेजः स्फूर्जितमूर्जितम् ।
तत्तस्य भूषणमभूद्दूषणं यन्महोदधेः ॥ ८ ॥
न बाणदानपूर्णेन शत्रुणा याचकेन [1]च ।
प्रधने मार्गणे तस्य पुनः पाणिः प्रसारितः ॥ ९ ॥
क्षीणदोषस्य तस्याद्यैर्भाविभिर्वा दिनैरिव ।
न ग्रीष्मान्तदिनाभस्य महत्त्वेऽनुकृतं परैः ॥ १० ॥
[2]शासनोल्लासितस्तस्य भ्रूविलासाभ्रविभ्रमः ।
चकार सुरहंसानां सहसैव विवासनम् ॥ ११ ॥
[3]विपन्नविभवोत्पन्नदैन्याः शून्यवनाश्रयाः ।
गुणाप्तजनरागेण तेन विसारिताः सुराः ॥ १२ ॥
अतपत्तपनो भूत्वा सोमो भूत्वासृजत्सुधाम् ।
उवाह हव्यं भूत्वाग्निर्वायुर्भूत्वा ववौ स्वयम् ॥ १३ ॥
स दधार धरां धीरः शेषात्मा [4]सचराचराम् ।
विधिर्भूत्वासृजद्[5]विश्वं कुर्वन्सर्वामरक्रियाः ॥ १४ ॥
मौलौ कमलजन्यस्तां हेममालामुवाह सः ।
संध्यामिव जगद्वन्द्यां प्रतापार्कोदयाग्रजाम् ॥ १५ ॥
तस्यातपत्रैर्यात्रासु गन्धर्वगणगीतिभिः ।
ननृतुः षट्सहस्राणि सुरवारमृगीदृशाम् ॥ १६ ॥
तं सभाम्भोजिनीराजहंसं सिंहासनस्थितम् ।
सेवाप्ताः [6]सहलोकेशमसुरेन्द्राः सिषेविरे ॥ १७ ॥

---

१. 'वा' ख-ग. २. 'शासनोल्लासनः' ख. ३. 'विपत्ति' क-घ. ४. 'सधराधराम्' ग-घ. ५. 'सृष्टिं' क-घ. ६. 'सर्वं' ख.

तारकस्त्रिशिरा वृत्रः शम्बरस्तुरगाननः ।
विप्रचित्तिर्द्रुमः सु[1]न्दः सुबन्धुर्बन्धुरन्धकः ॥ १८ ॥
वातापिर्नमुचिर्जम्भः सुम्भः शंभुर्जलोद्भवः ।
मायावी महिषः क्रौञ्चः कैटभो मधुरिल्वलः ॥ १९ ॥
.........................................[2] ।
राहुर्गजासुराद्याश्च तत्सभासभ्यतां ययुः ॥ २० ॥
स बभौ जाह्नवीधूतव्यजनेनोपवीजितः ।
सेवासेनेव लोलांशुकलापेन हिमत्विषा ॥ २१ ॥
बिम्बितानन्तसामन्तलोकमौक्तिकशोभिना ।
स हारेण हरेश्चक्रे विश्वरूपप्रतिक्रियाम् ॥ २२ ॥
मणिकङ्कणकेयूरकिरणैः सोऽदिशद्दिशाम् ।
दारिद्र्यद्रा[3]वणोन्निद्रां सृष्टिं रत्नमयीमिव ॥ २३ ॥
मौलौ तस्य सितोष्णीषपल्लवश्चपलाञ्चलः ।
शुशुभे भुवनाक्रान्तिहर्षहास इव श्रियः ॥ २४ ॥
वज्रदन्तः प्रतीहारस्तस्याग्रे विदधे दिशः ।
हेमवेत्रांशुभिः पिङ्गभ्रूभङ्गैरिव निश्चलाः ॥ २५ ॥
सभां निःस्पन्दनिःशब्दां स कृत्वाङ्गुलिसंज्ञया ।
प्रसादप्रणयोत्साही दैत्यराजं व्यजिज्ञपत् ॥ २६ ॥
पतति विनयपूते यस्य यस्य त्वदीयः
  शिरसि नखमयूखोत्केसरः पादपद्मः ।
उपविशति सहर्षा तत्र तत्रातपत्र-
  व्यजनतिलकहासा हारझांकारिणी श्रीः ॥ २७ ॥
एते बहिः प्रतीक्षन्ते देव सेवार्थिनस्तव ।
शक्र[4]भ्रंशनिरालम्बाः सिद्धगन्धर्वकिंनराः ॥ २८ ॥
दृशं देहि प्रसादार्द्रां प्रणमत्येष मातलिः ।
प्रवेशप्रतिषेधोऽस्य नारदेन निवारितः ॥ २९ ॥

---

१. 'स्कन्दः' ख-ग-घ. २. अत्रार्धश्लोकस्त्रुटितः सर्वेषु पुस्तकेषु. ३. 'दारण' ख. ४. 'शत्रु' ख.

एष विज्ञापयत्यग्रे हयग्रीवो हयाधिपः ।
उच्चैःश्रवाः श्रीसहजः कस्यां धुरि निधीयताम् ॥ ३० ॥
आज्ञामर्थयते देव गजाध्यक्षो गजासुरः ।
क्वास्तामैरावणो गन्धं सहते नान्यदन्तिनाम् ॥ ३१ ॥
भार्गवस्य गिरा लब्धतत्तुल्याभ्यर्चनासनः ।
मान्यतामवधानेन प्रस्तुताशीर्बृहस्पतिः ॥ ३२ ॥
विज्ञप्त्यवसराकाङ्क्षी राहुर्बहुमतस्तव ।
कमलाकेलिसदनं वदनाब्जं निरीक्षते ॥ ३३ ॥
प्रभोरभिमुखः कृत्वा क्षणं विज्ञापनामिति ।
परिवृत्ताननोऽग्रस्थान्प्रतीहारोऽब्रवीत्पुनः ॥ ३४ ॥
रम्भे स्तम्भय वि²भ्रमभ्रमकरीं निर्ह्रादिनीं मेखलां
गीतं संवृणु चित्रसेन चतुरं स्वैरं पुनर्गास्यसि ।
आशीर्न प्रतिषिध्यते कुरुत तां संक्षिप्य सप्तर्षयो
राहुर्दैत्यमहत्तमः प्रकुरुते विज्ञप्तिमग्रे प्रभोः ॥ ३५ ॥
द्रष्टा स्वर्गपुरे धृतः क्षितितले दत्तोऽधिकारी क्षमः
पाताले विहितश्च तत्समुचितास्तत्रैव विज्ञप्तयः ।
देवः संप्रति निर्वृतिप्रणयिनीं नि³श्चिन्ततां सेवते
पर्याप्तां सुखसुप्तसप्तभवनव्यापारपारंगमः ॥ ३६ ॥
इत्युक्ते वज्रदत्तेन तद्भ्रूनिर्दिष्टवेत्रिभिः ।
कृते सभाग्रे निःशब्दे भ्रूलेखाङ्गुलिसंज्ञया ॥ ३७ ॥
बलिः स्तोकनमन्मौलिरभिनन्द्य बृहस्पतिम् ।
तन्मानालोकनोत्साहादुच्चैरुच्चारिताशिषम् ॥ ३८ ॥
कृत्वा दृक्संविभागेन प्रणतानां कृतार्थताम् ।
विभज्याभिमताज्ञाभिः प्रणयं शासनार्थिनाम् ॥ ३९ ॥
स ⁴प्रसादादरस्निग्धसितदिग्धाधरद्युतिः ।
चक्रे श्रवणसंनद्धं राहोरभिमुखं मुखम् ॥ ४० ॥

१. 'द्वारि' क-ग-घ. २. 'विभ्रमभ्रमरकं निर्ह्रादिनी मेखला' ख. ३. 'निश्चिन्त्यतां सेव्यते' ख. ४. 'प्रसादादरोदारस्मित' ख.

क्षणं कुण्डलयोस्तस्य चण्डरश्मिशशित्विषोः ।
राहुसंदर्शनत्रासादिवाभूत्कम्पविप्लवः ॥ ४१ ॥
उच्यतामिति तेनोक्तः प्राह राहुरदेहताम् ।
दंष्ट्रांशुपटलस्पर्शपटेनाच्छादयन्निव ॥ ४२ ॥
जीर्णत्वादतिवृद्धानां क्लेशाय चिरजीवितम् ।
सर्वभावावियोगेन सदा येषामनिर्वृतिः ॥ ४३ ॥
रम्यं किं त्वेकमेवास्ति विस्तीर्णस्यायुषः फलम् ।
दृश्यते यत्कचित्किंचित्सोत्कर्षचरिताद्भुतम् ॥ ४४ ॥
सर्गारम्भदिने जातैर्नास्माभिर्दृष्टमीदृशम् ।
तदैश्वर्यं त्वदैश्वर्यप्रभावस्योपमाक्षमम् ॥ ४५ ॥
इयं श्रीरपरिश्रान्ता प्रभावोऽयं भुजोद्भवः ।
इयं शक्तिर्यशःसिक्ता कस्यान्यस्य यथा तव ॥ ४६ ॥
सर्गारम्भान्निसर्गेण नैव दृष्टो न च श्रुतः ।
अदर्पसंपत्प्रणयी निर्लोभविभवो जनः ॥ ४७ ॥
नतिर्मूर्ध्नि श्रुतं श्रोत्रे हृदये सत्त्वमुज्ज्वलम् ।
मौलिकुण्डलहारास्ते पुनरुक्तं विभूषणम् ॥ ४८ ॥
यशः सप्तसु लोकेषु श्रीराश्रितगृहेषु च ।
प्रोषितारातिचित्तेषु प्रतापाग्निस्त्वयार्पितः ॥ ४९ ॥
श्रुतमाश्रितवात्सल्यं कस्य वा सदृशं तव ।
प्रभोः प्रापयतो भृत्यान्भुवैव भुवनेशताम् ॥ ५० ॥
त्वत्पादाब्जप्रणामे नखकिरणमिलन्मौलिपट्टेन बद्धे
जम्भेनोत्तम्भिता भूः सुरभवनवती शातकौम्भाद्रिभर्तुः ।
पातालं तालकेतोः सकलमुपनतं तारकेणाहृता भूः
कौबेरः कोष एव प्रविशति नमुचेर्वेश्म युष्मद्विलब्धः ॥ ५१ ॥
प्रसादभूमयः सर्वे दैत्यास्ते भुजशालिनः ।
महोत्साहास्त्वयं राहुरबाहुः क्वोपयुज्यते ॥ ५२ ॥

१. 'प्रभवस्य' ख. २. 'प्रथयतः' ख.

अहं हि हितमात्रैकचिन्तालब्धप्रजागरः।
त्वत्पितामहमुख्यानां भोगभागी निरर्गलः॥ ९३॥
अत्यन्तस्थविरः कायापायसंकुचितोद्यमः।
चित्तग्रहं न जानेऽहं तारुण्यतरलस्य ते॥ ९४॥
तुहिनातपतुल्योऽयं वीणापटहसंनिभः।
न सङ्गः श्लिष्टतामेति वृद्धस्य तरुणस्य च॥ ९५॥
केशोत्तालनमङ्गभङ्गवलनं भ्रूविभ्रमोल्लासनं
यत्तत्कत्थनमप्रसङ्गहसनं दन्तप्रभादर्शनम्।
उत्सिक्तैः प्रकटीकृतं विटनटैः कौटिल्यनाट्यायितं
यूनां वृद्धमतिद्विषामभिमतं प्रायः प्रभूणामिदम्॥ ९६॥
भवानभिमुखायातैर्भृत्यैरभिमुखीकृतः।
उत्सङ्गवर्धितमपि त्वां न जानामि सेवितुम्॥ ९७॥
कोषप्रवेशकुशलाः सकलां कमलश्रियम्।
मधुपा मधुरालापनिपुणा एव भुञ्जते॥ ९८॥
अङ्के वृद्धिमुपागतं शिशुतया सर्वाङ्गमालिङ्गितं
मत्स्यः श्रीपरिरम्भनिर्भरतरं व्याकोशकोषोन्मुखैः।
आशाप्तैः परिपीयमानमनिशं निःस्पन्दमिन्दिन्दिरै-
र्दूरादेष निमेषशून्यनयनः पद्मं समुद्वीक्षते॥ ९९॥
दैवेन पक्षपातोऽयं कृतः कायव्ययाय मे।
त्वत्कृतः पक्षपातस्तु न मयाप्तः शरीरदः॥ ६०॥
ऐन्द्रं वारुणमाग्नेयं याम्यं सौम्यं च पावनम्।
प्राजापत्यं च कुर्वाणः कर्म सर्वं त्वमास्थितः॥ ६१॥
आस्तां शरीरविरहक्लेशप्रशमनं मम।
त्वद्विभूतिप्रभावेऽस्मिन्प्रकृतं हारितं मया॥ ६२॥
पीयूषपानपैशुन्यमन्युशल्यानुबन्धिनः।
विधिना मम निर्दिष्टौ चन्द्रार्कौ जातु भोजनम्॥ ६३॥

---

१. 'देहमात्रैक' ख. २. 'आयातैः' क-ग-घ. ३. 'सपावनम्' ख.

भवद्भ्रूभङ्गसिंहेन त्रासितो हरिणाश्रयः[1] ।
न वेद्मि विद्यते क्वेन्दुर्विद्रुताश्वः क्व भास्करः ॥ ६४ ॥
चिरसेवापरिश्रान्तः क्षीणवृत्तिर्निरुद्यमः ।
विशेषलाभत्यक्ताशः[2] स्वेनैवार्थेन तुष्यति ॥ ६५ ॥
तस्मान्ममानुरोधेन क्रियतामर्कचन्द्रयोः ।
त्वदादेशविमुक्तैव निर्विघ्ना[3] गगने गतिः ॥ ६६ ॥
इत्युक्ते राहुणा नासान्यस्ताङ्गुलितलः क्षणम्[4] ।
आलुलोके बलिः क्षोणीं वैलक्ष्यक्षामलोचनः ॥ ६७ ॥
सोऽवदन्मुखमुद्यम्य शनैर्मुकुलितस्मितम् ।
दिशन्दिक्षु प्रसादार्द्रां दृष्टिं चन्द्रमयीमिव ॥ ६८ ॥
मदाज्ञाप्रतिषिद्धोऽपि स्वाधिकारोऽर्कचन्द्रयोः ।
अधुना निर्विबन्धेन वज्रदन्त विमुच्यताम् ॥ ६९ ॥
इति शासनमम्लानप्रसादप्रभवं विभोः ।
प्रतीहारः समादाय वेत्रिमण्डलमादिशत् ॥ ७० ॥
अत्रान्तरे समासन्नस्नानावसरसूचकः ।
उदभूद्भुवनव्याप्ति[5]मुखरः शङ्खनिःस्वनः ॥ ७१ ॥
राहोराश्रितवत्सलः फलवतीं कृत्वार्थिनां मानदः
सर्वाशापरिपूरकः प्रणयिनामुन्निद्रकल्पद्रुमः ।
वेत्रिव्रातनिवेद्यमानविनमत्सामन्तचूडामणि-
व्याकीर्णांशुविचित्रितादुदचलत्सिंहासनाग्राद्बलिः ॥ ७२ ॥
अथ कीर्तिसुधाधौतसुकृतः स्नपनं[6] विधिम् ।
विधाय प्रययौ श्रीमान्दानस्थानभुवं बलिः ॥ ७३ ॥
तत्र त्रिवेदीविद्वद्भ्यः काञ्चनप्रचयान्बहून् ।
मेरुभ्रमोपविष्टाभ्रानदभ्रान्प्रत्यपादयत् ॥ ७४ ॥

---

१. 'हरिणो यथा' क-ग. २. 'त्यक्तविशेषलाभाशः' क-ख. ३. 'निर्मुखा' ग-घ. ४. 'क्षणात्' क-ख. ५. 'व्यापी' ख. ६. 'स्नानसंविधिम्' ख.

मुहुर्विप्राप्र्यमाणानां हयानां हेममालिनाम् ।
स्खलत्खलीनफेनौघैर्यशःसिक्तेव भूरभूत् ॥ ७५ ॥

दन्तिदानक्षणे तत्र घटासंघट्टघट्टिताः ।
संश्लिष्टघण्टाटंकारैर्ययुर्मुखरतां दिशः ॥ ७६ ॥

रत्नभारानताश्वेरुर्यस्यां यस्यां दिशि द्विजाः ।
सन्तः संतोषिताश्चक्रुस्तस्यै तस्यै नमो नमः ॥ ७७ ॥

तस्याग्रे रोहणाद्रिः शिरसि धृतमहारत्नसंपूर्णपात्रः
कैलासः शक्रशैलः सह बहलतरैः कल्पवृक्षैः सदेहैः ।
भूमिश्चिन्तामणिः श्रीर्विविधनिधिगणः कामधेनुः सुधाब्धि-
र्भ्रूक्षेपाज्ञाविलासे प्रचरणचतुरा दानकाले बभूवुः ॥ ७८ ॥

संपूर्णेष्वर्थिसार्थेषु याचकाभावदुःखिनः ।
विश्रान्तपाणेश्चिन्तान्तर्मुहूर्तमभवद्बलेः ॥ ७९ ॥

दानोद्यमेऽर्थिविरहाद्विपुलां विभूतिं
स क्षिप्रमूषरमहीमिव मन्यमानः ।
दृष्टिं मुहुर्दिशि दिशि प्रदिदेश दीर्घा-
मस्तोकलोककरुणामृतवृष्टिमिष्टाम् ॥ ८० ॥

सर्वार्थानर्थिसार्थेभ्यः परिकल्प्याविकल्पधीः ।
निजजीवितदानेन बलिश्चक्रे मनोरथम् ॥ ८१ ॥

अथ त्यक्तजलासङ्गः प्रसन्नगगनद्युतिः ।
प्रतिबुद्धः शरत्कालः श्रीकान्तः समुपाययौ ॥ ८२ ॥

मयूरा मौनिनोऽरण्ये ययुर्दैन्यनिलीनताम् ।
शरत्कालेन बलिना सुरा इव हृतश्रियः ॥ ८३ ॥

ववुर्देवकदम्बेषु यातेषु विशरारुताम् ।
द्युलोकशोकनिःश्वासा इव सप्तच्छदानिलाः ॥ ८४ ॥

---

१. 'विलासप्रचरण' ख. २. 'अफलां' ख. ३. 'प्रतिबुद्धशरत्कालः' ख.

तीव्रशूरप्रतापेन नष्टमाना समाययौ ।
विलुप्तावरणोत्साहा[1] हीनतां सुरवाहिनी ॥ ८५ ॥
सदानवप्रभोल्लासं बभौ भ्राजिष्णुतारकम् ।
शरन्निशासु विपुलं दैत्यैश्वर्यमिवाम्बरम् ॥ ८६ ॥
लोकपालवियोगिन्यः ककुभः काशपाण्डुराः ।
फुल्लैः कमलकह्लारैः कृतशय्या इवाबभुः ॥ ८७ ॥
शुशुभे शैलशीर्षेषु नक्तं दीप्तौषधिव्रजः ।
नश्यतामिव मेघानां विद्युल्लेखाचयश्च्युतः ॥ ८८ ॥
भग्ने प्रभौ सहस्राक्षे पयोदास्त्यक्तकार्मुकाः[2] ।
ययुस्तीव्रव्रतेनेव तनुतां भस्मपाण्डुराः ॥ ८९ ॥
बलिराज्योपमे तीव्रप्रतापे शरदुद्भवे ।
नाक्रान्तिः शक्रचापस्य भ्रष्टस्यादृश्यत क्वचित् ॥ ९० ॥
ययुः शुकमृगापाते कलमक्षेत्रपङ्क्तयः ।
विधवा इव तारुण्ये कृच्छ्रसंरक्षणीयताम् ॥ ९१ ॥
काशेन्दुहंसकुमुदैर्महीव्योमसरिद्दिशः ।
दानोदितैरिव[3] बलेर्यशोभिः शुभ्रतां ययुः ॥ ९२ ॥
अथास्मिन्समये जग्मुः सुराः शरणमच्युतम् ।
निवारितार्चाबलिना बलिना बलिना जिताः ॥ ९३ ॥
घनावमानसंतप्ता मानलोपाप्तलाघवाः ।
प्रकाशाशाप्रणयिनः शारदा इव वासराः ॥ ९४ ॥
ते क्षीरोदधिमासाद्य ददृशुः शेषशायिनम् ।
सप्रसादं सकमलं शरदारम्भसंनिभम् ॥ ९५ ॥
समुच्छ्वसत्फणाग्रस्य फुल्लफेनाम्बुधेरिव ।
शेषस्योपरि पर्यङ्कबन्धेन सुखमास्थितम् ॥ ९६ ॥
प्रभाभिरामं श्रीकान्तं पीताम्बरमनोहरम् ।
प्रभातमिव लोकानां कल्याणोदयकारणम् ॥ ९७ ॥

१. 'विलुप्तरवणो' क, 'विलुप्तरचनो' घ. २. 'विग्रहाः' ग. ३. 'दानोद्यतैः' ख-ग-घ.

तं प्रणम्य सहस्राक्षप्रमुखास्त्रिदिवौकसः ।
धृतिसंजीवनं प्रापुस्तत्प्रसादावलोकनम् ॥ ९८ ॥
प्रवासव्यसनोद्विग्नान्भगवान्भूतभावनः ।
तान्विभाव्याभवत्क्षिप्रं वैलक्ष्यविनताननः ॥ ९९ ॥
शनैश्चिन्ताविषावेशप्रशमासङ्गिनीं गिरम् ।
उज्जगारामृतोद्गारगुर्वीं गरुडलाञ्छनः ॥ १०० ॥
चिरप्रवासनिःश्रीक[1]शोकशल्यशलाकया ।
चिन्तया व्यथिता यूयं सततं प्रथमानया ॥ १०१ ॥
दैत्यदौरात्म्यसंजाता सह्या सर्वात्मना विपत् ।
ते कथं भाजनं भूतेर्ये सहन्ते न दुर्दशाम् ॥ १०२ ॥
सुखलवदशाहर्षक्लैब्ये खलः खलु खेलते
स्खलति भजते लेशक्लेशे विषादविषूचिकाम् ।
भवति न सतां दर्पोद्दामा न दैन्यमयी मैति-[2]
र्दुरभिभवता गम्भीराणां [3]सुखेष्वसुखेषु च ॥ १०३ ॥
त्यक्त्वा श्रीर्दुर्जनान्दैत्यान्साधून्युष्मानुपैष्यति ।
स्थिरा सतां न विपदः खलानामिव संपदः ॥ १०४ ॥
वित्ते त्यागः क्षमा शक्तौ दुःखे दैन्यविहीनता ।
निर्दम्भता सदाचारे स्वभावोऽयं महात्मनाम् ॥ १०५ ॥
स्वाम्ये पेशलता गुणे विनतता हर्षे निरुत्सेकता
मन्त्रे संवृतता श्रुते सुमतिता वित्तोदये त्यागिता ।
साधौ सादरता खले विमुखता पापे परं भीरुता
दुःखे क्लेशसहिष्णुता च महतां कल्याणमाकाङ्क्षति ॥ १०६ ॥
उक्ते हिते भगवता पद्मनाभेन भूतये ।
सुरास्तमूचिरे बाला इव वात्सल्यलालिताः ॥ १०७ ॥
देव त्वय्यपि संनद्धे हितचिन्तासु नः परम् ।
इयती कर्मवैचित्र्याद्दुर्वारा दुःखसंततिः ॥ १०८ ॥

१. 'निःशूक' ख. २. 'गतिः' क. ३. 'सुखेषु दुःखेषु च' ख.

जीवामः क्लिष्टसंक्लिष्टा निश्चेष्टा नष्टवृत्तयः ।
वनान्तविवरालीनाः शिशिरे मधुपा इव ॥ १०९ ॥
बलिना वयमाक्रान्ताः प्राक्तनेनेव कर्मणा ।
त्वत्प्रभावोद्भवां भोक्तुं विभूतिं न लभामहे ॥ ११० ॥
बलिप्रभावादस्तोकैस्त्रिलोकी लोककण्टकैः ।
इयं त्वद्भुजगुप्तापि लुण्ठ्यते दैत्यदस्युभिः ॥ १११ ॥
सा नन्दनोद्यानवती हृता तेनामरावती ।
वने विनोदयत्यस्मान्मनोरथपथागता ॥ ११२ ॥
वने स्वर्गपुरीमेव[1] चिन्तयन्त्यः सुराङ्गनाः ।
काङ्क्षन्त्युत्कण्ठया निद्रां स्वप्नसंदर्शनाशया ॥ ११३ ॥
अग्रे समग्रसैन्यानां बलिसंश्रयनिर्भयः ।
अहो बाहुविहीनोऽपि राहुराहवमीहते ॥ ११४ ॥
दैवेनेवार्पिताक्रान्तिर्बलिनाश्चर्यकारिणा ।
सहस्राक्षस्य निर्बन्धादन्धकः श्रीविबन्धकः[2] ॥ ११५ ॥
जृम्भते[3] तारकः कामं त्रिदशश्रीप्रतारकः ।
दुःशीलः स बलेः शक्त्या लीलातरलतारकः ॥ ११६ ॥
गजासुरः कथायाते स्पर्धाबन्धे मदान्धधीः ।
बलेरग्रे गणपतेरेकदन्तस्य लज्जते ॥ ११७ ॥
शोचन्सिंहनखोत्खातं हिरण्यकशिपुं रुरुः ।
असंनिधानानुशयी हरिणा योद्धुमिच्छति ॥ ११८ ॥
सहस्रदोष्णा बाणेन बालेन बलिसूनुना ।
गुहवाहमयूरोऽपि नीतः क्रीडाशिखण्डिताम् ॥ ११९ ॥
वह्निवाहशुकस्तेन न्यस्तः काञ्चनपञ्जरे[4] ।
गृहोपवनवापीषु राजहंसाश्च वारुणाः ॥ १२० ॥

---

१. 'स्थितां पुरीं' ख. २. 'निबन्धकः' घ. ३. ख-पुस्तके पूर्वोत्तरार्धयोर्व्यत्ययः. ४. 'कनक' ख.

सोऽपि प्रतापशिखिना युगपत्संयुगोन्मुखः ।
अचिरात्त्रिपुरप्लोषं रौद्रो बाणः करिष्यति ॥ १२१ ॥
शम्बरोऽम्बरचित्राभं दर्शयत्यद्भुतं रणे ।
यदस्य शत्रुहृदये शक्तिर्व्रजति शूलताम् ॥ १२२ ॥
यान्ति निष्फलतामेव तेषू[1]पायाः प्रकल्पिताः ।
उपकाराः कृतघ्नेषु सज्जनेष्विव मन्यवः ॥ १२३ ॥
[2]समतां सामविमुखः सामस्वनविधायिनः ।
स तवाप्यश्वशीर्षस्य हयग्रीवः समीहते ॥ १२४ ॥
सुरसर्वस्वहारिभ्यस्तेभ्यः किं वा प्रदीयते ।
मेरुरत्नाकरवती कोषो येषां जगत्त्रयी ॥ १२५ ॥
बलिशासनवश्यानां भेदो नास्ति सुरद्विषाम् ।
आलिङ्गति हयग्रीवं निर्वैरो महिषासुरः ॥ १२६ ॥
भवद्भ्रूभङ्ग एवैकस्तेषां दण्डः क्षयक्षमः ।
सोऽप्यसद्भाग्यलेशेन मन्ये विस्मारितस्तव ॥ १२७ ॥
बलिः करोति भगवँल्लोकपालक्रियाः स्वयम् ।
लोके द्रष्टासि निःशेषे शेषे शेषे तु केवलम् ॥ १२८ ॥
इत्युक्ते त्रिदशैरूचे विचार्य चिरमच्युतः ।
सुराणां विभवभ्रंशं बलेश्च गुणगौरवम् ॥ १२९ ॥
[3]बलिः पुण्यप्रवृत्तत्वान्नोच्छेद्यः सत्त्वसागरः ।
चिरं क्लेशार्दिता यूयमिति दो[4]लायते मनः ॥ १३० ॥
विचार्यमाणस्तु बलेर्नात्मदोषः प्रदृश्यते ।
दैत्यदुर्जनसङ्गेन स गतश्चिन्तनीयताम् ॥ १३१ ॥
शमयति यशः क्लेशं सूते दिशत्यशिवां दशां
जनयति जनोद्वेगायासं नयत्युपहास्यताम् ।
भ्रमयति मतिं मानं हन्ति क्षिणोति च जीवितं
गिलति सकलं कल्याणानां कुलं खलसंगमः ॥ १३२ ॥

१. 'तेन मायाः' ख. २. 'समत्वं' ख. ३. 'बलेः' ख-ग-घ. ४. 'लोलायते' ख.

सर्वात्मना गुणनिधिर्न वध्यः सुकृती बलिः ।
किं त्वस्य विभवभ्रंशं करोमि भवतां हितम् ॥ १३३ ॥
हितक्रियासु युष्माकं न कार्यं गणयाम्यहम् ।
गम्यतां त्यज्यतां चिन्ता यतिष्ये कुशलाय वः ॥ १३४ ॥
इत्युक्ते विश्वगुरुणा तं प्रणम्य ययुः सुराः ।
अचिन्तयच्च तत्कार्यं भगवान्गरुडध्वजः ॥ १३५ ॥
अत्रान्तरे भृगुसुतः षाड्गुण्यज्ञानलोचनः ।
शुक्रः प्रोवाच वात्सल्यान्निर्जनावसरे बलिम् ॥ १३६ ॥
औचित्याभरणं चित्तं सत्याभरणमाननम् ।
गुणाभरणमैश्वर्यं भुवनाभरणस्य ते ॥ १३७ ॥
लोके त्वत्सदृशी लक्ष्मीर्न श्रुता न विलोकिता ।
शक्यानुकर्तुं लेशेन या न पूर्वैर्न चापरैः ॥ १३८ ॥
गुणक्षये पलायन्ते धीवराणामिव क्षणात् ।
एताश्चपलचारिण्यश्चमर्य इव संपदः ॥ १३९ ॥
क्षीयते श्रीः प्रमादेन शरत्कालेन निम्नगा ।
ग्रीष्मागमेन रजनी कृष्णपक्षेण चन्द्रिका ॥ १४० ॥
[1]नीतेरश्रवणं हिते विहसनं धूर्तव्रजावर्जनं
दोषे व्याकरणं गुणेऽप्यगणनं छिद्रच्छलालोकनम् ।
लोकानां विनिपातलक्षणमिदं श्रीभोगनिर्वासनं
साधूनां दलनं खलेषु ललनं मित्रादिसंदूषणम् ॥ १४१ ॥
दोषा अपि न बाधन्ते विचारविमलीकृताः[2] ।
गुणा अप्यगुणायन्ते गाढग्रहघनीकृताः ॥ १४२ ॥
न शरीरविकाराय स्वल्पमात्राहृतं विषम् ।
देहं चन्दनलेपोऽपि निबिडः पीडयत्यलम् ॥ १४३ ॥

---

१. 'नीतेरश्रवणं हते विहसनं सत्यच्युताकर्णनं विद्वद्वर्जनमार्जवोपहननं धूर्तव्रजावर्जनम् । दोषे व्याकरणं गुणेऽप्यगणनं छिद्रच्छलालोकनं लोलानां विनिपातलक्षणमिदं श्रीभोगनिर्वासनम् ॥' ख. २. 'विरलीकृताः' ख.

गुणरत्नावलीमध्ये सारभूतं गुणद्वयम् ।
तवैतद्दोषतां यातमतिनिर्बन्धसेवया ॥ १४४ ॥

श्लाघ्यमाश्रितवात्सल्यं दानं च श्रीविभूषणम् ।
विभवायासतां नीतं भवतात्यन्तवर्धितम् ॥ १४५ ॥

कुर्यादाश्रितवात्सल्यात्पक्षपातं न दुर्जने ।
कृष्णपक्षाश्रयेणैव पक्षे पक्षे क्षयी विधुः ॥ १४६ ॥

चित्रं चारित्रचित्रं ते दिग्भित्तिलिखितं महत् ।
दैत्यदुर्जनवात्सल्यधूमेन मलिनीकृतम् ॥ १४७ ॥

भूतेर्दुर्व्यसनं धृतेरसहनं मानोन्नतेर्याचनं
प्रीतेर्विस्मरणं तनोर्निकषणं नीतेरसन्मन्त्रणम् ।
कीर्तेर्लोभधनं स्थितेः प्रवसनं वृत्तेरसंचिन्तनं
शक्तेर्दुर्जनपक्षपातकरणं निःशेषनिर्मूलनम् ॥ १४८ ॥

अतिप्रदाननिर्बन्धः सर्वस्वक्षपणक्षमः ।
छिनत्त्यन्यार्थिवैफल्याद्धर्मवृक्षं क्रियाफलम् ॥ १४९ ॥

सर्वोपजीव्यं सर्वस्वं सकृद्येन व्ययीकृतम् ।
पुनः सर्वार्थिदानस्य तेन मूलक्षयः कृतः ॥ १५० ॥

वित्तायत्तः सदा धर्मः कामो वित्तनिबन्धनः ।
वित्तायत्तानि चित्तानि वित्तं जीवितवर्धनम् ॥ १५१ ॥

धनं रूपमवैकृव्यं धनं कुलमसंकुलम् ।
धनं यौवनमम्लानं धनमायुर्निरामयम् ॥ १५२ ॥

रूपं वेषैर्बलं भृत्यैरुत्तमैर्मानमर्थिभिः ।
महाकुलविवाहैश्च कुलं क्रीणाति वित्तवान् ॥ १५३ ॥

भिषग्भैषज्याभ्यां तरति धनवान्रोगविपदं
धनेनान्धश्चक्षुर्युत इव चरत्यर्पितकरः ।

---

१. 'प्रधान' ख. २. 'क्रियालतम्' ख. ३. 'वर्तनम्' ख, 'बन्धनम्' ग. ४. 'अवैरूप्यं' ख.

धनैः सत्काराचीं जगति गतजीवोऽपि लभते
धनेन प्राप्नोति प्रगुणगुरुमाराध्य सुगतिम् ॥ १९४ ॥
श्राद्धोत्सवलसद्बन्धुर्जीवतीव शवः श्रिया ।
भोज्योपचारविरहाद्बन्धूनां निर्धनो मृतः ॥ १९५ ॥
क्लेशलभ्यं धनं येन क्षपितं नातिमात्रया ।
कुलमानगुणाचारनिधनं तेन रक्षितम् ॥ १९६ ॥
गुणा धनेन लभ्यन्ते न गुणैर्लभ्यते धनम् ।
धनी गुणवतां सेव्यो गुणी न धनिनां क्वचित् ॥ १९७ ॥
सेव्यन्तेऽर्थार्थिभिर्भूपा जयजीवेति वादिभिः ।
स्याच्चेन्न धनसंबन्धः कः सेव्यः कश्च सेवकः ॥ १९८ ॥
सदृशे पुरुषत्वेऽपि तुल्यपादकरोदरे ।
एकः प्रभुः परो दास इति वित्तविजृम्भितम् ॥ १९९ ॥
सर्वे धनमदान्धस्य प्रातःप्रातर्धनाशया ।
सेवां विधातुं धावन्ति विविधाराधनोद्यमैः ॥ १६० ॥
सिद्धो वेतालवद्यस्य भोग्यस्तस्यैव भूपतिः[1] ।
शेषाः शीतातपश्रान्ता दिनान्ते यान्ति निष्फलाः ॥ १६१ ॥
दिशति कथमप्यन्तस्तारां दृशं मदमन्थरां
वदति विरलं देवोऽस्मीति प्रमूढमदो[2] नृपः ।
प्रणमति च तं भीत्या भृत्यस्तदुत्तरकातर-
स्तदिदमखिलं दानादानं[3] धनोपनिबन्धनम् ॥ १६२ ॥
क्षीणे धने गुणे ग्लाने म्लाने माने गते जने ।
कलत्रमपि[4] वैमुख्यमचिराद्याति निश्चितम् ॥ १६३ ॥
धनवैक्लव्यवैराग्यादपक्काः प्रव्रजन्ति ये ।
धनोपायव्रतं तेषां धने ध्यानं धने जपः ॥ १६४ ॥

---

१. 'भूपतेः' क-ग-घ. २. 'प्रमूढपदं' ग. ३. 'मानामानं' ख. ४. 'कलत्रमत्रपैर्यावत्परोपकरणीकृतम्' क.

पुंसां निवृत्तवित्तानां प्रवृत्ते वित्तयाचने।
उत्तानपाणि[1]दीनानां मन्ये मरणमुत्तमम् ॥ १६५ ॥
[2]जीवत्यर्थक्षये नीचो याच्ञापचयवञ्चनैः।
कुलाभिमानमूकानां साधूनां नास्ति जीवितम् ॥ १६६ ॥
अप्रस्तावस्तुतिभिरनिशं कर्णशूलं करोति
स्वं दारिद्र्यं वदति वसनं दर्शयत्येव जीर्णम्।
छायाभूतश्चलति न पुनः पार्श्वयोर्नापि पश्चा-
न्निःस्वः खेदं दिशति धनिनां व्याधिवद्दुश्चिकित्स्यः ॥ १६७ ॥
तस्मात्सर्वप्रयत्नेन रक्ष्यं मानार्थिभिर्धनम्।
महाव्ययपरिष्कारैर्विशेषेण नरेश्वरैः ॥ १६८ ॥
अश्वमेधस्त्वयारब्धः क्रतुः सर्वस्वदक्षिणः।
एवमेव त्वमुद्दामवर्षी यज्ञे विशेषतः ॥ १६९ ॥
दृश्यन्ते दुर्निमित्तानि प्रवृत्तानि समन्ततः।
दैत्यानां यैः कुवृत्तानां निवृत्तिः सूच्यते श्रियः ॥ १७० ॥
[3]इत्युक्तं कविना श्रुत्वा बभाषे तं शनैर्बलिः।
सत्त्वोदधिः सृजन्दन्तकान्त्या चन्द्रकलामिव ॥ १७१ ॥
युक्तं कल्याणसंयुक्तमुक्तमुन्मुक्तसंशयम्।
भगवन्भवता सर्वमखर्वप्रतिभोद्भवम् ॥ १७२ ॥
न जातु मे भुजच्छायाविश्रान्तिसुखशायिषु।
अपत्येष्विव दैत्येषु पक्षपातो निवर्तते ॥ १७३ ॥
चिर[4]श्रितपरित्यागे मतिर्यस्य प्रवर्तते।
भूमिर्भारं वहन्ती तं मन्ये मज्जति लज्जिता ॥ १७४ ॥
स्वजनद्रोहरौद्रस्य चिताग्नेरिव भीषणा।
[5]भूतिः सर्वजनोद्वेगकारिणी क्वोपयुज्यते ॥ १७५ ॥

---

१. 'दैन्यानां' ख. २. 'जीवन्त्यर्थक्षये नीचा याच्ञोपप्लव' ख. ३. 'इत्युक्ते' क-ग. ४. 'चिराश्रय' क-ग-घ. ५. 'भीतिः' क-ग.

आशासाश्रितपक्षपातविकला या शक्तिरुज्जृम्भते
दीर्घा वेतसवल्लरीव विफला कस्योपकाराय सा ।
वन्ध्यश्चन्दनपादपः पृथुभुजच्छायाश्रया यस्य ते
संतापं प्रविहाय शीतलतया सर्पाः सुखं शेरते ॥ १७६ ॥

प्रदानफलशून्याभिः किमेताभिर्विभूतिभिः ।
दृश्यते यासु भग्नाशाविमुखं मुखमर्थिनाम् ॥ १७७ ॥

आयाति धातुरादेशात्तदादिष्टं पलायते ।
न त्यागेन न भोगेन क्षीयते रक्ष्यते धनम् ॥ १७८ ॥

निर्बन्धाद[1]पि लुब्धेन निरुद्धं बद्धमुष्टिना ।
निर्यात्यलक्षितं क्षिप्रं मत्स्यपुच्छोपमं धनम् ॥ १७९ ॥

कुर्वन्ति सुधियो यत्नादेतद[2]र्थं धनार्जनम् ।
आर्तोपकारसंतोषः कदाचिल्लभ्यते धनात् ॥ १८० ॥

क्षणेन वृद्धिं व्रजतां क्षणात्क्षयमुपेयुषाम् ।
घनानां च धनानां च केन विज्ञायते गतिः ॥ १८१ ॥

गुप्तं विनष्टं प्रकटं विनष्टं कीर्णं विनष्टं मिलितं विनष्टम् ।
स्वयं विनष्टं परतो विनष्टं दीनार्त[3]दत्तं द्रविणं न नष्टम् ॥ १८२ ॥

मृत्पाषाणगुणैः सुवर्णमणिभिः [4]शुक्त्यस्थिभिर्मौक्तिकै-
र्लोके मूढतमे धनं धनमिति व्यक्त्या प्रसिद्धिं गतैः ।
यः कोषः क्रियते न तस्य रुचिरं पश्यामि किंचित्फलं
निःशेषाश्रितभृत्यबान्धवसुहृद्दीनार्थिदानं विना ॥ १८३ ॥

त्यक्त्वा मर्त्यभुवं स्थितस्य विजने मेरोः सुवर्णश्रियं
विश्रान्तां स्वशरीर एव वहतः किं निष्फलेनायुषा ।
एकस्योन्नतिरेव सत्त्ववसतेर्विन्ध्यस्य वन्ध्या न सा
दत्त्वा यः किल तामनन्यमहिमा शेते सुखं भूसमः ॥ १८४ ॥

इत्युक्तं बलिना श्रुत्वा चिन्तयन्भवितव्यताम् ।
किंचिदालक्ष्य वैलक्ष्यः शुक्रश्चक्रे नतं शिरः ॥ १८५ ॥

---

१. 'अति' ख. २. 'अर्थे' ग. ३. 'मुक्तं' ख. ४. 'शुक्त्यस्थिकैः' घ.

अथाश्वमेधसंभारः प्रावर्तत महान्बलेः ।
पुनः प्रदानदक्षस्य दक्षस्येवापरिक्षयः ॥ १८६ ॥
ततः प्रजापतिगणे प्राप्ते सप्तर्षिभिः सह ।
अभूत्सुरर्षिभिर्जुष्टं ब्रह्मलोकनिभं सदः ॥ १८७ ॥
तस्मिन्क्रतौ महादानपरिपूर्णेऽर्थिमण्डले ।
बभूव याचकाभावाद्बलेश्चिन्तैव केवलम् ॥ १८८ ॥

अत्रान्तरे दैत्यजयासहिष्णुर्विष्णुस्त्रिलोकीकुशलप्रवृत्तः ।
देवस्तनुं स्वां बलिवञ्चनाय विश्वाकृतिर्वामनतां निनाय ॥ १८९ ॥
धृतैव चित्ते लघुतां करोति या धैर्यमानाहरणैकभूमिः ।
सा दुर्दशेवातिशयेन याच्ञा न कस्य मानक्षतिमातनोति ॥ १९० ॥
श्यामः शिशुः कुञ्चितकृष्णकेशस्त्रिदण्डिकालंकृतपाणिपद्मः ।
सकङ्कणः कुण्डलवान्किरीटी स ब्रह्मराज्य(?)प्रतिमश्चकाशे ॥ १९१ ॥
स मञ्जुसामस्वरसारणोद्यद्दन्तांशुसूत्रत्रयसंनिवेशम् ।
यज्ञोपवीतं धवलं दधानः शनैर्बलेर्यज्ञमहीमवाप ॥ १९२ ॥
स वेत्रिभिस्तत्र सुदुर्लभार्थिसंदर्शनात्यादरविस्मयेन ।
असंनिरुद्धः प्रसभं प्रविश्य वृतं मुनीन्द्रैर्बलिमालुलोके ॥ १९३ ॥
बलिश्च तं पद्मदलायताक्षं विलोक्य लक्ष्मीनिलयं प्रहृष्टः ।
अदापयत्तस्य सुवर्णपीठं समुन्नतं मानमिवादरेण ॥ १९४ ॥
सामस्वरेणाशिषमभ्युदीर्य क्षणं स विश्रम्य जगाद धीरः ।
संदर्शयन्दन्तरुचान्तरस्थजगत्त्रयश्चान्द्रमिव प्रकाशम् ॥ १९५ ॥
इन्द्रस्य चन्द्रस्य चतुर्मुखस्य रुद्रस्य दक्षस्य मनोश्च यज्ञाः ।
पुरा बभूवुर्न बभूव कश्चिदाश्चर्यकृत्त्वत्सदृशस्तु यज्ञः ॥ १९६ ॥
अहो महात्मा सुकृती जगत्सु जातस्त्वमेवाद्भुतसत्त्वसिन्धुः ।
यश्चारुरत्नाश्वगजेन्द्रचन्द्रलक्ष्मीप्रदानेष्वपि निष्प्रकम्पः ॥ १९७ ॥
धवस्त्रिलोक्यास्तिलकः कुलस्य सर्वस्वदानेष्वतिमुक्तहस्तः ।
दत्त्वाप्यशोकः सरलः प्रकृत्या त्वं श्रीफलोऽप्यर्थिषु कल्पवृक्षः ॥ १९८ ॥

१. 'पद्मदलायतेक्षणं' ख. २. 'सुवर्णं' इति क-पुस्तके टिप्पणम्.

इत्युक्तमत्यर्थसुधास्वभावं[1] तेनान्तरस्थामृतसिन्धुनेव ।
श्रुत्वा बलिः प्रीतिविकासिताक्षस्तमभ्यधादागतपक्षपातः ॥ १९९ ॥
अल्पं वयः स्वल्पशरीरतेयमनल्पकल्पः प्रतिभाविकल्पः ।
कर्णानुकूलं च वचस्त्वैतत्कस्याद्भुतार्थं न मनः करोति ॥ २०० ॥

हर्षं वर्षति दर्शनं नयनयोः सूते श्रुतौ वाक्सुधां
चित्तं चन्दनपेशलश्च सहसा स्नेहः परं लिम्पति ।
बध्नन्त्यन्यमनस्कतामपि गुणा भाग्यैर्भवत्संगमः
संजातः सुकृताय मे सुमहते कीर्तिप्ररोहाय च ॥ २०१ ॥

निरर्गलं संप्रति कथ्यतां तद्यदीप्सितं प्रीतिपदोपयुक्तम्[4] ।
सर्वस्वमेतन्मम जीवितं वा न नाम किंचिद्भवतेऽस्त्यदेयम् ॥ २०२ ॥
इति प्रयत्नात्प्रथमादरेण सोऽभ्यर्थितः सर्वपरिग्रहाय ।
दैत्याधिपेन प्रथमानमानमहोदयाय प्रणयात्तमूचे ॥ २०३ ॥
त्वद्दर्शनात्प्रीतिसुधानिधानात्परं किमस्मादुपयुज्यते मे ।
न नाम वन्ध्यं क्रियते वचस्ते पदत्रयीं देहि वसुंधरायाः ॥ २०४ ॥
श्रुत्वैवमाश्चर्यतरं वचस्तद्बलिः सवैलक्ष्यमिवाबभाषे[5] ।
अहो भवान्संकुचितार्थवादी विडम्बनायैव मम प्रवृत्तः ॥ २०५ ॥
अहं प्रदाता त्वमुदारशीलः प्रतिग्रहीतात्र[6] प्रतिग्रहे किम् ।
मदीयते यद्यवमानलीला विनिर्मिता नर्ममयी स्मिताय ॥ २०६ ॥
गृहाण सर्वं मम विद्यते यत्त्वद्दर्शनानन्दसमुद्भवस्य ।
मनःप्रसादस्य हि सत्यमस्य न तुल्यमूल्या सकला त्रिलोकी ॥ २०७ ॥
इत्यर्थितः पूर्णपरिग्रहाय पुनः प्रयत्नाद्बलिनापि देवः ।
यदाग्रहीन्नाभ्यधिकं तदास्मै पदत्रयीमेव बलिर्दिदेश ॥ २०८ ॥
प्रतिग्रहाग्रावसरेऽथ विष्णोरुत्तानहस्ताम्बुरुहेऽम्बुधाराम् ।
सुवर्णभृङ्गारमुखात्पतन्तीमस्तम्भयद्दैत्यहिताय शुक्रः ॥ २०९ ॥

१. 'अत्यन्तसुधास्वभावः' ग-घ. २. 'विकासिचक्षुः' घ. ३. 'वपुषि' क-पुस्तके पाठान्तरत्वेन धृतः. ४. 'प्रीतिपदप्रयुक्तम्' ख. ५. 'सवैलक्ष्यः' ख. ६. 'प्रतिग्रही त्र पदत्रयी' ख.

तं शुक्रवक्रक्रममाकलय्य चक्री त्रिलोक्याक्रमणाभिकामः।
स्तोकस्मिताङ्कः कुशतूलिकाग्रभेदेन चक्रे कविमेकनेत्रम् ॥ २१० ॥
विश्वाकृतिर्दानजलं गृहीत्वा लोकत्रयाक्रान्तिविवर्धमानः।
बभौ जगन्मण्डपमानदण्डशोभाभिरामोदितदण्डपादः ॥ २११ ॥
त्रैलोक्याक्रान्तिलीलाप्रविसृतवपुषः श्रीपतेर्दण्डपादः
प्रौढोत्क्षेपोग्रवेगोल्लसदतुलबलोद्भ्रान्तकल्पान्तवातः[1]।
निःशेषाशाप्रबन्धप्रचलनभुवनाखण्डनाकाण्डकम्प-
भ्रश्यद्ब्रह्माण्डरक्षानिहितमरकतस्तम्भशोभां बभार ॥ २१२ ॥
प्रवर्धमानस्य विलम्बिहारपर्यन्तसक्तस्तरणिर्मुहूर्तम्।
विष्णोर्बभौ नाभिभवाब्जचुम्बी कुर्वन्मुहुर्लोहितरत्नशङ्काम् ॥ २१३ ॥
प्राप्तेऽथ विष्णोश्चरणारविन्दे विरञ्चिलोकं त्रिदशाभिनन्द्ये।
पादार्घ्यदानावसरेऽब्जजन्मा कमण्डलुं निर्जलमालुलोके ॥ २१४ ॥
धर्मे द्रुते तत्क्षणमम्बुभावं यातेऽथ पाद्ये कमलासनेन।
भक्त्या प्रदत्ते बलिकीर्तिशुभ्रा तरङ्गभङ्गैरुदियाय गङ्गा ॥ २१५ ॥
किं विष्णोः पादपद्मस्फुटनखकिरणश्रेणिरच्छोच्छलन्ती
विश्वव्याप्तिप्रजातोर्जितविजयलसद्वैजयन्ती सिता किम्।
किं स्वर्गश्रीप्रहर्षोचितहसितरुचिः प्रोन्मिषत्संशयाना-
मित्युच्चैः खेचराणां चिरममरसरित्संभ्रमेऽभूत्प्रवादः ॥ २१६ ॥
एकक्रमावृतसमस्तजगत्त्रयस्य
शेषक्रमद्वितयदानविशुद्धिधीरः[2]।
निर्व्याजधर्मधवलः स्थिरसत्त्वसत्य-
स्तत्याज दैत्यतिलकः सकलां त्रिलोकीम् ॥ २१७ ॥
तस्याथ सत्यसमयप्रतिपन्नसर्व-[3]
त्यागस्य दीर्घगुणपाशनियन्त्रितस्य।
धीरस्य सप्तमतलान्तसुतालनाम्नि
पातालधाम्नि भगवान्स्थितिमादिदेश ॥ २१८ ॥

---

१. 'वेलोल्लसत्' क-ग-घ. २. 'चारविशुद्धः' क-ग-घ. ३. 'सत्त्व' ख.

जातो जगत्युचितकृद्बलिरेक एव
तस्यैव सप्तभुवनाभरणं यशांसि।
येनातिदानविततद्रविणावशेष-
शुद्धिः कृता स्वतनुबन्धसमर्पणेन ॥ २१९ ॥
अश्रद्धया कुहकदम्भभरेण यद्य-
त्पित्र्यक्रतुव्रतजपादि करोति लोकः।
तत्तद्बलेर्नियमसंकलितात्मवृत्ते-
र्वृत्त्यै विचार्य परिकल्पितमच्युतेन ॥ २२० ॥
साश्चर्यं युधि शौर्यमप्रतिहतं तत्खण्डिताखण्डलं[1]
याच्ञोत्तानकरः कृतः स भगवान्दानेन लक्ष्मीपतिः।
ऐश्वर्यं स्वकराप्तसप्तभुवनं लब्धाब्धिपारं यशः
सर्वं दुर्जनसंगमेन सहसा स्पष्टं विनष्टं बलेः ॥ २२१ ॥
सशरशबरत्रासत्वङ्गन्मृगीतरलाः श्रियः
सुखमपि कपिप्रेङ्खद्[2]वल्लीदलाञ्चलचञ्चलम्।
प्रतिदिनमियं भुङ्क्ते जन्तोरभावविधायिनी
प्रसभपतिता भावं[3] भावं भवे भवितव्यता ॥ २२२ ॥
इति स भगवान्विष्णुः कर्तुं सुराश्रयिणीं श्रियं
बलिभुजतरुच्छायाहीनान्विधाय महासुरान्।
अपि खलजनासङ्गाद्भूमेर्गतस्य तलं बलेः
प्रणयरचितां[4] पुण्यैः कीर्तिं निनाय समुन्नतिम् ॥ २२३ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते दशावतारचरिते वामनावतारः पञ्चमः।

---

परशुरामावतारः षष्ठः।

बद्धे बलौ निश्चलधर्मसेतौ भग्नेषु दैत्येषु निराश्रयेषु।
बभूव निर्विघ्नमहोत्सव[5]श्रीर्निःशल्यकल्याणवती त्रिलोकी ॥ १ ॥

---

१. 'उत्' ख. २. 'प्राङ्खत्' क-ग-घ. ३. 'भावे भावे' घ. ४. 'रचनां' ख.
५. 'घनोत्सव' ख.

शक्रेण वृत्रे निहते सजम्भे सुम्भे निसुम्भे प्रसभं भवान्या ।
जीर्णेऽप्यगस्त्येन समस्तलोकशोकेऽथ वातापिनि सेल्वले च ॥ २ ॥
चामुण्डया चण्डपराक्रमे च ग्रस्तेऽथ पातालततानेनेन ।
रुरौ रणप्रच्युतरक्तबिन्दुवृन्दोदरोद्यद्रुरुकोटिलक्ष्ये ॥ ३ ॥
गुहेन भिन्ने युधि तारके च गजासुरे धूर्जटिनान्धके च ।
दैत्येषु चान्येषु हतेषु देवैर्निःशङ्कमासीत्सुरराजराज्यम् ॥ ४ ॥
यातेऽथ काले शनकैर्विशाले दैत्येश्वराः क्ष्मामवतीर्य सर्वे ।
क्रमेण ते दुर्मददस्युरूपाः सपापशापाः क्षितिपा बभूवुः ॥ ५ ॥
शशास तस्मिन्समये महीयान्महीपतिर्हैहयवंशजन्मा ।
प्राज्योर्जितश्रीर्जगदर्जुनाख्यः सहस्रबाहुः कृतवीर्यसूनुः ॥ ६ ॥
स्पर्धानुबन्धोद्धतदर्पयुद्धसंनद्धधीरं दशकंधरं यः ।
गदाग्रहेलाहतिनष्टचेष्टं शय्याङ्कपर्यङ्कतले बबन्ध ॥ ७ ॥
अत्रान्तरे शौर्यनिधिर्भृगूणां कुले विशाले जमदग्निपुत्रः ।
हरिस्तमःकुञ्जरपुञ्जभेदी प्रतापदीप्तोऽवततार रामः ॥ ८ ॥
तस्योपदेष्टा भगवान्बभूव शार्ङ्गे धनुर्वेदविधौ पिनाकी ।
आदानसंधानदृढातिदूरलक्ष्येषु दत्ताद्भुतलक्षशिक्षः ॥ ९ ॥
शस्त्रास्त्रविद्याविदितप्रकर्षसंघर्षयुद्धे जिततारकारिः ।
पुत्राधिकां वल्लभतां गुणेन जगाम रामस्त्रिपुरान्तकस्य ॥ १० ॥
मदग्रहोदग्रगजासुरास्थिविसंस्थुलाखण्डनखण्डधारम् ।
ददौ त्रिशूली परशुं स्वमस्मै क्रूरं कुमारावजयेन तुष्टः ॥ ११ ॥
ततः कदाचिन्मृगयारसेन स कार्तवीर्यः प्रविसारिसैन्यः ।
वनं विगाह्य क्षयमक्षयेषुश्चक्रे मृगद्वीपिमृगेश्वराणाम् ॥ १२ ॥
मन्त्रद्विषां दुःसहमोहहेतुर्दयादरिद्रं हृदयं सदैव ।
कर्षत्यलं शोणितमांसलुब्धा धराधराणां मृगयापिशाची ॥ १३ ॥
तुरङ्गसेनामृदितस्थलानि शराहताशेषमृगद्विपानि ।
विश्रब्धदुतोपद्रुततापसानि प्रविश्य चक्रे स तपोवनानि ॥ १४ ॥

१. 'हेहय' क-ग-घ. २. 'संघट्ट' ख. ३. 'विश्वद्रवोपद्रुत' ख.

अथाश्रमाग्रं[1] जमदग्निजुष्टं भग्नद्रुमं रुग्णविविग्नसत्त्वम् ।
कृत्वा शनैः श्रान्तहयः स तस्थौ विश्रामकामः कुसुमस्थलीषु ॥१५॥
होमावशेषैः सकुशैः पयोभिः संवर्धितानां स कुरङ्गकाणाम् ।
मुनीन्द्रशिष्यैरपि वार्यमाणः सैन्यैः क्षयं निष्करुणश्चकार ॥ १६ ॥
स कामधेनुं मुनिहोमहव्ययोग्यां सवत्सां गुणगौरवेण ।
कण्ठे गृहीत्वा जमदग्निनापि रुद्धां मदान्धस्तरसा जहार ॥ १७ ॥
क्रौर्येण कीर्तिर्व्यसनेन लक्ष्मीर्द्वेषेण विद्या विनतिर्मदेन ।
क्षमातिकोपेन धृतिर्भयेन प्रयाति लोभेन च सर्वमेव ॥ १८ ॥
यातः स हृत्वा मुनिहोमधेनुं लोभेन विक्रीतविवेकसत्त्वः ।
यशांसि लोकत्रयविश्रुतानि चकार धिक्कारकलङ्कितानि ॥ १९ ॥

निरुद्धाशाः सर्वे दधति भृशमुद्वेगकलनां
विवेकालोकस्य प्रभवति न लेशः क्वचिदपि ।
न मित्रस्यालोको भवति परिहारेण वदने (?)
घने लोभे जन्तोः स्थितिमुपगते कस्य सुगतिः ॥ २० ॥

गतेऽथ तस्मिन्नृपतौ स्वदेशं महामुनीनां विहितापकारे ।
रामः समभ्येत्य गजाश्वभग्नं तपोवनं निर्मृगमालुलोकि ॥ २१ ॥
निवृत्तवेदस्मृतियज्ञविद्यापुराणवादं विरताग्निकार्यम् ।
भग्नाननोद्विग्नजनं विलोक्य तपोवनं प्राप च[2] शोकशङ्कुम् ॥ २२ ॥
विज्ञाय राज्ञा तदशर्म कर्म स कार्तवीर्येण कृतं सकोपः ।
शुश्राव तेनैव पितुः सवत्सां बलेन नीतामपि होमधेनुम् ॥ २३ ॥
स निःश्वसन्दुःसहकोपकम्पलुठज्जटाभारभृतांसकूटः[3] ।
क्षत्रक्षयोत्कण्ठमकुण्ठधारं कुठारमादाय जवाज्जगाम ॥ २४ ॥
स हैहयीं हेममयीमवाप्य प्रतापदीप्तामिव राजधानीम् ।
युद्धाय संनद्धभुजासहस्रमस्रस्तधैर्योऽर्जुनमाजुहाव ॥ २५ ॥
तयोः प्रवृत्ते भुवनप्रकम्पदीक्षाक्षमे संक्षयधाम्नि युद्धे ।
क्षोभः प्रभूताद्भुतसंभ्रमोऽभूदभूतभूताभिभवप्रगल्भः[4] ॥ २६ ॥

---

१. 'अथावसान्तं' ग-घ. २. 'स' ख. ३. 'पीठः' ख. ४. 'प्रकम्पः' क-ग-घ.

[1]तस्याखण्डप्रतापः कठिनमदभराकुण्ठकण्ठस्य वेगा-
न्निक्षिप्य स्कन्धपीठे गिरिदलनसहं [2]घोरधारं कुठारम् ।
भूभर्तुर्धेनुचौर्याचरणघनरुषा कार्तवीर्यस्य रामः
[3]त्रस्तांसं दोःसहस्रं युधि नवनलिनीनाललावं लुलाव ॥ २७ ॥
प्रतापमित्रे निहते सहस्रकरेऽथ तस्मिन्भुवनैकशूरे ।
रामस्य निर्यत्ननिपातितारेर्मर्मप्रसारी न शशाम मन्युः ॥ २८ ॥
द्विबाहुना बाहुसहस्रदीप्ते हते नृशक्रे मुनिना प्रसह्य ।
स शृङ्गभङ्गः क्षितिभृत्कुलस्य तीव्रः परं मानविनाशनोऽभूत् ॥ २९ ॥
कालेन तन्मन्युर्[4]घनानुतापाः पापाय सर्वे मिलिताः क्षितीशाः ।
वैरप्रतीकारविधानसज्जा जग्मुर्वनं भार्गवकुञ्जरस्य ॥ ३० ॥
रामे फलेध्माहरणाय याते शून्यं प्रविश्याथ तपोवनं ते ।
[5]निष्कृत्तकण्ठस्रुतशोणितौघमग्नं निजघ्नुर्जमदग्निमेव ॥ ३१ ॥
रामस्ततः पितृवधोद्धतशोकवह्नेः
शान्तिं न बाष्पजलबिन्दुभिरप्यवेत्य ।
आसीत्क्षणं क्षितिप[6]जीवितजातलज्ज-
स्तद्रक्तसागरनिमज्जनसज्ज एव ॥ ३२ ॥
गत्वा जवेन रणयज्ञविधानदीक्षा-
क्षेत्रं क्षणात्क्षितिपवंशवनोग्रवह्निः ।
कृत्वा समस्तनृपसंहृतिमेकवारं
[7]वैरंक्षयेण [8]न मनाग्विरराम रामः ॥ ३३ ॥
स स्नात्वा रक्तपूर्णे रणसरसि [9]लसत्कीर्तिधौतोत्तरीयः
क्रोधानृण्यं विधातुं कृतसकलजगत्क्षत्रवंशाग्निकार्यः ।
श्राद्धश्रद्धाविधानं व्यधित शरकुशाकीर्णभूपालमौलि-
श्रेणीहेमांशु[10]निर्यत्तिललवकलितन्यस्ततन्मुण्डपिण्डः ॥ ३४ ॥

---

१. 'तस्याकुण्ठ' ख. २. 'कर्मभारं' ख, 'कर्मधारं' घ. ३. 'संत्रस्तं' ख. ४. 'घनाभितापाः' ख. ५. 'निकृत्त' ख. ६. 'जीवन' ख. ७. 'वैरि' ख. ८. 'स' ग. ९. 'लुठत्' क. १०. 'तिम्यत्' ख.

निःक्षत्रां क्षत्रियारिर्जलनिधिपरिखामेखलान्तामखिन्नः
　　कृत्वा त्रिःसप्तकृत्वः पितृवरनिधनक्रोधनः क्ष्मां क्षणेन ।
यः प्रादादेकविप्रार्पितजलचुलकस्तोकदानातिलज्जा-
　　मज्जन्मानाननाब्जः सितसितयशसस्तस्य किं वर्ण्यतेऽन्यत् ॥ ३९ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते दशावतारचरिते परशुरामावतारः षष्ठः ।

---

श्रीरामावतारः सप्तमः ।

कालप्रवाहे महति प्रयाते तन्मध्यवेगाभिरते गते च ।
तरङ्गलोलाद्भूतभाववर्गे रक्षःकुलैर्भारयुताभवद्भूः ॥ १ ॥
अत्रान्तरे सालकैटङ्कटानां वंशे विशाले क्षणदाचराणाम् ।
पुष्पोत्कटा नाम बभूव कन्या तारुण्यदर्पेऽपि विवाहहीना ॥ २ ॥
सा मेरुपार्श्वे मणिहेमवल्लीविलासरम्योपवने चरन्ती ।
सुतं पुलस्त्यस्य तपोनिधानं संध्याक्षणे विश्रवसं ददर्श ॥ ३ ॥
ध्यानावसाने मुनिना सकम्पा प्रीत्याथ सा तेन विलोकितैव ।
नवाभिलाषोद्भवविह्वलेव भावान्विता गर्भवती बभूव ॥ ४ ॥
क्रमेण तेनैव मुनेः सपर्याविधायिनी तस्य तपोवने सा ।
असूत पुत्रत्रितयं विचित्रकर्मप्रकारेण विभिन्नरूपम् ॥ ५ ॥
दशाननाद्याः परिवर्धमानाश्चक्रुश्चिरं घोरतरं तपस्ते ।
पितामहप्रीतिवरादवापुर्येन त्रिलोकीक्षपणक्षमत्वम् ॥ ६ ॥
महेश्वराराधनहोमवह्नौ छित्त्वा दशास्यः स्वशिरांसि हुत्वा ।
जम्भारिसाम्राज्यजयी जगाम जगत्त्रयीलुण्ठनकण्टकत्वम् ॥ ७ ॥
त्रैलोक्यपुण्यैरथ कुम्भकर्णस्तपोवरासौ विपरीतवाचा ।
अक्षीणनिद्रः सततं बभूव प्रबोधनादेकदिनाप्तभोज्यः ॥ ८ ॥
वरप्रदानेऽथ विधिं ययाचे विभीषणो धर्ममतिं मनीषी ।
तद्वाक्यतुष्टेन पितामहेन नीतः स धीमानमरत्वमेव ॥ ९ ॥

---

१. 'निःक्षत्रां' क-ग, 'निष्क्षत्रां' घ.　२. 'भार्गवावतार' क-ग-घ.　३. 'कटोत्कटानां' ख.

भ्रातुर्बलाद्वैश्रवणस्य लङ्कां हृत्वा[1] पुरीं रत्नहिरण्यहर्म्याम् ।
दशाननः पुष्पकमुज्ज्वलं च विमानराजं विजयोद्यतोऽभूत् ॥ १० ॥
जित्वा स विश्वं विगतारिचिन्तः संजातसङ्ग्रामवियोगखेदः ।
लोकत्रये चित्तविनोदनाय विमानमारुह्य चिरं चचार ॥ ११ ॥
स निर्झरोद्गारतुषारशैलसुवर्णरत्नोज्ज्वलतुङ्गशृङ्गे ।
क्षणं न्यषीदद्दिवसावसाने तद्भीतिलीनास्विव पद्मिनीषु ॥ १२ ॥
तापं मुहुर्दिक्पतिवल्लभानां करावमर्षैः ककुभां विधाय ।
कुमुद्वतीबन्धनपापशापाज्जगाम दुःशील इवास्तमर्कः ॥ १३ ॥
सांध्यं प्रकाशं परिपीय रक्तं निजौजसा लोकनिमीलनानि[2] ।
निशागमोत्साहपदं क्रमेण तमांसि रक्षांसि च तुल्यमापुः ॥ १४ ॥
अथोद्ययावग्रसरप्रकाशभ्रश्यत्तमःस्तोकयुतान्तरिक्षे ।
सुधातरङ्गाकुलकालकूटकरम्बिते क्षीरनिधाविवेन्दुः ॥ १५ ॥
तमःसमूहस्तरुकुञ्जपुञ्जतलस्थितश्चातश्चान्द्रमसं प्रकाशम् ।
बभौ दशग्रीव इव प्रयत्नात्कैलासमुल्लासयितुं प्रवृत्तः ॥ १६ ॥
जहार लक्ष्मीं कमलाकराणां चकार भङ्गं सुरचक्रनाम्नाम् ।
बभार दोषाश्रयवान्कलङ्कं लङ्कापतिर्दिग्विजयीव चन्द्रः ॥ १७ ॥
हृन्मर्मसंलग्नशिलीमुखेषु दीर्णेषु सद्यः कुमुदव्रजेषु ।
सरःसु चन्द्रप्रतिबिम्बमूर्तिर्दशास्यभीत्येव मुहुश्चकम्पे ॥ १८ ॥

समीराः सोत्कण्ठा इव ललितवल्लीकुलवधू-
समाकर्षैः क्रीडानिबिडदशकण्ठानुकृतयः ।
विचेरुर्वापीनां कुमुदमधुमाद्यन्मधुकरा-
कुलश्रेणीवेणीहठहरणहेलातरलिताः ॥ १९ ॥

उन्निद्रचन्द्राभरणे निशीथे तस्मिन्महानन्दघनप्रकाशे ।
प्रीतिः सुखस्पर्शमयी[3] बभूव वैराग्यभाजामनुरागिणां च ॥ २० ॥
लङ्केश्वरस्तत्र शशाङ्करत्नशिलातले रश्मिविलासहासे ।
सुखं शयानः पुरतः प्रयान्तीं जितेन्द्रलक्ष्मीं ललनां[4] ददर्श ॥ २१ ॥

१. 'हित्वा' ख. २. 'निमीलितानि' ख. ३. 'मुखी' क-ख. ४. 'वनितां' ख.

दशाननोत्सादितनाकलोकलक्ष्मीमिवैकां विजने भ्रमन्तीम् ।
मैत्रीमिव प्रेमभराभिरामां तारुण्यलावण्यमनोभवानाम् ॥ २२ ॥

विलोक्य लङ्कापतिरङ्कमुक्तशशाङ्कशङ्काजनननानां ताम् ।
स्वप्नेऽप्यदृष्टां मनसाप्यचिन्त्यां हर्षामृतक्षैब्यमिवाससाद ॥ २३ ॥

अचिन्तितापातकिरातभीतां मृगीमिवालम्ब्य बलेन पाणौ ।
स तां बभाषे विभवाभिमानं तद्भोगशून्यं विफलं विचिन्त्य ॥ २४ ॥

कस्यान्तिकं कुञ्जरगामिनि त्वं प्रयासि धन्यस्य रणोज्झितासोः ।
आराधितः केन तपोविशेषैः सौभाग्यभूमिर्भगवान्मनोभूः ॥ २५ ॥

न त्यज्यसे[1] सुभ्रु कुरु प्रसादं लब्धां सुधां मुञ्चति मन्दपुण्यः ।
त्यक्तान्ययत्नोपनतानि[2] मोहात्पुनर्न लभ्यानि समीहितानि ॥ २६ ॥

इति ब्रुवाणेन दशाननेन तन्वी वनालिङ्गनपीडिताङ्गी ।
काञ्चीविमुक्तिप्रतिषेधदिग्धं वैलक्ष्यमुग्धाक्षरमाचचक्षे ॥ २७ ॥

बलेन नीवी ननु न प्रमोच्या विमुञ्च मां दुर्व्यसनस्पृहां च ।
अशीललीलाशकलीकृतां त्वं ह्रियं श्रियं रक्ष यशः कुलं च ॥ २८ ॥

रम्भाभिधानां सुरलोककान्तां त्वद्भ्रातृसूनोर्नडकूबरस्य[3] ।
प्राणोपमानां धनदात्मजस्य[4] न वेत्सि किं मां सुमते स्नुषां त्वम्[5] ॥२९॥

इति ब्रुवाणामबलां बलेन संदूष्य मातङ्ग इवाब्जिनीं ताम् ।
म्लानाननाब्जामवमानलीनां लज्जानिमज्जद्वदनां मुमोच ॥ ३० ॥

उच्छिष्टाधरपल्लवां नखमुखोल्लेखावखातस्तनीं
विस्रस्तांशुककेशपाशकुसुमामुत्कम्पिनीं मन्युना ।
श्वासायासवतीं सबाष्पनयनां तन्वीं वहन्ती तनुं
सा गत्वा नडकूबरस्य विदितं पौलस्त्यवृत्तं व्यधात् ॥ ३१ ॥

दृष्टाभिभूतां नडकूबरस्तां श्रुत्वा कुवृत्तं च निशाचरस्य ।
अकामकान्तारतिसंगमान्तं तस्यास्तु दुर्जीवितमित्युवाच ॥ ३२ ॥

---

१. 'त्याज्यसे' क-ग-घ. २. 'उपगतानि' क, 'उपहितानि' ख. ३. 'धनदात्मजस्य' ख. ४. 'नडकूवरस्य' ख. ५. 'त्वं सुमते स्नुषां माम्' ख.

नक्तंचरैस्तत्क्षणवर्ण्यमानं तच्छापमाकर्ण्य भृशं[1] दशास्यः ।
अन्तर्वहन्दुश्चरितानुतापं विमानमारुह्य शनैर्जगाम[2] ॥ ३३ ॥

सुखक्षैब्यक्षामाः प्रकटमवटापातगतयः
क्षिपन्तः शीलाख्यं व्यसनमविलक्ष्याः क्षतधियः ।
स्खलन्तः कुर्वन्ति प्रसभमवलेपेन किल त-
द्यदुद्भूतस्तापः प्रचलति न जीवान्तनियतः ॥ ३४ ॥

व्योम्ना व्रजन्तं पुरतस्तमेत्य माहेश्वरः प्राह गणः सकोपः ।
हंहो निवर्तस्व भजस्व नीतिं व्योम्ना गतिर्नेह नभश्चराणाम् ॥ ३५ ॥

सतीसहायः स्फटिकाद्रिशृङ्गे देवो मृडः क्रीडति चन्द्रचूडः ।
पार्श्वेन यात्यत्र मरीचिमाली भयेन नोच्चैर्मरुतोऽपि वान्ति ॥ ३६ ॥

श्रुत्वा मदोद्गारगिरं गणस्य दुष्टद्विपः क्रुष्ट इवाङ्कुशेन ।
दष्टाधरः कोपकषायचक्षुर्नोवाच किंचित्स[3] हरानुरोधात् ॥ ३७ ॥

श्वसन्विमानादवरुह्य सज्जः स मज्जयन्भूमिमिवाभ्युपेत्य ।
स्कन्धेन[4] पातालतलान्तमूलात्कैलासमुल्लासितमुज्जहार ॥ ३८ ॥

विघूर्णमानाद्रिगुहागृहेभ्यः समन्ततः संभ्रमविद्रुतानाम् ।
संत्रस्तविद्याधरसुन्दरीणां काञ्चीरवैः खं मुखरीबभूव ॥ ३९ ॥

क्ष्मान्तोत्क्षेपातिवेगप्रसरदनलसोल्लासकैलासकम्प-
क्षोभे बिभ्यद्भवानीनिभृतभुजलतालिङ्गितश्चन्द्रचूडः ।
दाशास्यैर्हर्षहासं व्यभजत चरणाकुञ्चिताङ्गुष्ठपीडा-
व्रीडानिर्भुग्नमीलन्नयनगलगलद्गर्गरोद्गाररावैः ॥ ४० ॥

अत्युग्ररावेण दशाननस्य प्रसादवान्रावण इत्यभिख्याम् ।
चक्रे पिनाकी प्रियतां प्रयान्ति प्रायः प्रभूणां विपरीतचेष्टाः ॥ ४१ ॥

तुष्टात्पुनः प्राप्य वरं त्रिनेत्रात्त्रैलोक्यलक्ष्मीपरिभोगभव्यम् ।
व्रजन्विमानेन दशाननः खे सकौतुकः पुष्पकमित्युवाच ॥ ४२ ॥

---

१. 'तदा' ख. २. जगामेत्यनन्तरं 'इति नडकूबरशापः' इति ख-पुस्तकेऽधिकमस्ति. ३. 'सहसानुरोधात्' क-ग-घ. ४. 'स्कन्देन' सर्वेषु पुस्तकेषु.

य एष दूरात्कनकाचलस्य संलक्ष्यते दक्षिणपार्श्वदेशे ।
शृङ्गाग्रलग्नोज्ज्वलरत्नशैलस्तदङ्कविश्रान्तिसुखे ममेच्छा ॥ ४३ ॥
इति ब्रुवाणः क्षणदाचरेन्द्रः क्षणाद्विमानेन जवेन नीतः ।
तस्याद्भुताद्रेर्विचचार पद्भ्यां रत्नस्थले कल्पलतावृतान्ते ॥ ४४ ॥
वैदूर्यगारुत्मतपद्मरागवज्रेन्द्रनीलामलशैलशृङ्गम् ।
पश्यन्नवालोकनहर्षमानी न रावणः कौतुकतृप्तिमाप ॥ ४५ ॥
क्वचित्स्खलन्निर्झरराजवन्तं गुहागृहोद्गीर्णमहाट्टहासम् ।
भीत्येव नीहारपटावृतानि निमीलयन्तं ककुभां मुखानि ॥ ४६ ॥
समुल्लसन्नीलमणिस्थलोरु स्थूलांशुपुञ्जोन्नतदण्डपादम् ।
पुनः प्रवृत्तं बलिवञ्चनाय व्याप्ताम्बरं विष्णुमिवाप्रमेयम् ॥ ४७ ॥
बलान्वितोद्यद्धनकालनेमिं प्रह्लादसंरब्धजलोद्भवोग्रम् ।
सतारकाग्रं कटकं वहन्तं यातं हिरण्याक्षमिवाचलत्वम् ॥ ४८ ॥
सविस्मयानन्ददृशा समन्तान्निर्वर्णयन्नेव मुहुर्महाद्रिम् ।
तदुच्चशृङ्गाश्रमधाम्नि दिव्यां कन्यामपश्यत्स तपःप्रसक्ताम् ॥ ४९ ॥
तन्वीं स्तनाभोगभरादवाप्तसंसक्तकृष्णाजिनगाढबन्धाम् ।
लतामिवोद्यत्स्तबकाभिलाषनिःस्पन्दलीनालिकुलाभिरामाम् ॥ ५० ॥
पौलस्त्यविध्वस्तसमस्तलोकघनावमानानलतीव्रचिन्ताम् ।
शक्रश्रियं स्वर्गवियोगखिन्नां रक्षःक्षयायेव तपःप्रवृत्ताम् ॥ ५१ ॥
तां वीक्ष्य रक्षःपतिरक्षयेन्दुमुखीं सखीनेत्रसुधां[1] निपीय ।
मेने तदुच्छिष्टरुचापि शिष्टां सृष्टां न संक्लिष्टनिकृष्टसृष्टिम् ॥ ५२ ॥
पुनः सदाचारपरम्परार्हपाद्यासनादिप्रणयप्रवृत्ताम् ।
तामब्रवीदद्भुतरूपसंपत्संपन्नपूजः क्षणदाचरेन्द्रः ॥ ५३ ॥
का त्वं मनोजन्मविवर्जितेव रतिर्विरागव्रतदुर्ग्रहेण ।
मदेन विद्या कपटेन मैत्री लोभेन लक्ष्मीरिव लुप्तशोभा ॥ ५४ ॥
ध्यानावधानं परमोऽवमानस्त्रपाकरं पात्रमथाक्षसूत्रम् ।
वने निवासस्तव यौवनेऽस्मिन्नपश्च शापः कुसुमायुधस्य ॥ ५५ ॥

१. 'सुखी' ग, 'सखीं' घ.

त्यक्त्वाग्रहं ब्रूहि विचिन्त्य तन्वि त्वमेव सत्यं यदि युक्तमेतत् ।
बिम्बाधरे चुम्बनकेलियोग्ये जपेन पापार्जनमेव मुग्धे ॥ ९६ ॥
निरञ्जनत्वं कुसुमप्रसक्तिश्चित्रं जटाबन्धनकारणं ते ।
अनङ्गरागं कुरु मा शरीरमनङ्गरागं वह चेतसि त्वम् ॥ ९७ ॥
भोगोत्सवं मानय मा नय त्वं क्लेशैरदोषं कृशतां शरीरम् ।
अहं हि ते तन्वि समीहिते च हिते च संपादनबद्धकक्षः ॥ ९८ ॥
शृङ्गारस्य गतैव भाग्यगुरुतानङ्गस्य नाङ्गस्पृहा
लावण्यं घनमन्युदैन्यमलिनं का यौवनस्योन्नतिः ।
नोद्यानं दयितं मधुर्विधिहतः कस्येन्दुरानन्दनः
कान्ते ते तपसि स्थिता यदि मतिस्तत्सर्वमस्तं गतम् ॥ ९९ ॥
श्रुत्वैतदुक्तं दशकंधरेण सा किंचिदाकुञ्चितचेतनेव ।
जगाद खेदेन विनिःश्वसन्ती ह्रियावमानेन च मन्युना च ॥ ६० ॥
व्रते विवादं विमतिं विवेके सत्येऽतिशङ्कां विनये विकारम् ।
गुणेऽवमानं कुशले निषेधं धर्मे विरोधं न करोति साधुः ॥ ६१ ॥
कचस्य वाचस्पतिसंभवस्य स्वाध्यायजा वेदवती सुताहम् ।
देया मयेयं स्वयमच्युताय मनोरथोऽभूत्पितुरित्ययं मे ॥ ६२ ॥
कालेन दैत्यैः स हतः पिता मे मातानलं शोकमिव प्रविष्टा ।
वरार्थिनी देवमनन्यचित्ता तपः प्रवृत्ता हरिमर्थयेऽहम् ॥ ६३ ॥
इति ब्रुवाणां दशकंधरस्तां गाढानुबन्धेन घनाभिलाषः ।
पुनःपुनः क्षीब इव प्रलापी कोपाग्निसंतापवतीं चकार ॥ ६४ ॥
स्मृत्वा स शापं नडकूबरोक्तं संत्यक्तकान्ताहठसङ्गवाञ्छः ।
नखक्षतोच्छिष्टकुचस्थलीं तां कृत्वा जगाम स्वपुरीं सकामः ॥ ६५ ॥
सा मानिनी दुर्विषहावमानं रक्षःकरस्पर्शममृष्यमाणा ।
कुलाभिमानेन्धनमात्मशुद्ध्यै पूर्वं प्रकोपाग्निमिवाविवेश ॥ ६६ ॥
चिरं विचिन्त्याच्युतमच्युताशा जन्मास्तु मे राक्षससंक्षयाय ।
उक्त्वेति दृष्ट्वा रविमद्रिशृङ्गात्तापेन तन्वी तनुमुत्ससर्ज ॥ ६७ ॥

१. 'भिमानं' ख.

अम्लानं कुशलं कुलं च विमलं सत्सङ्गगण्या गुणा
मान्या मानधनोन्नतिर्विनिधनं धर्मावधानं धनम् ।
कीर्तिर्मूर्तिरसंक्षयाद्भुतवती शक्तिश्च संरक्ष्यते
जन्तोरिन्द्रियसंयमेन सकलं नष्टं न यस्यास्ति सः ॥ ६८ ॥

प्रविश्य लङ्कामलकां विजित्य हृत्वा पुनर्वैश्रवणस्य कोशम् ।
काले विशालेऽनिलवत्प्रयाते लङ्कापतिः पुष्पकमित्युवाच ॥ ६९ ॥

दृष्टः पुराश्चर्यगिरिर्मया यः पुनस्तदालोकनकौतुकं मे ।
रम्यं निपीतं बत नेत्रपात्रैर्न विस्मरत्येव मनः कदाचित् ॥ ७० ॥

इत्यादराभ्यर्थनयन्त्रितेन नीतः क्षणेनैव स पुष्पकेण ।
तं देशमेत्यायतकालजिह्वालीढं न तं प्रौढगिरिं ददर्श ॥ ७१ ॥

उत्पत्तिवृद्धिक्षयपाकयुक्त्या क्षणे क्षणे दृष्टविनष्टसर्वः ।
प्रायः प्रपञ्चप्रणयी भवोऽयमभावसद्भावसमस्तभावः ॥ ७२ ॥

तत्राभ्यपश्यन्नगराण्यगण्यरत्नप्रयत्नक्रयविक्रयाणि ।
परस्परारब्धविरोधि[1]युद्धसंधानसंनद्धधराधिपानि ॥ ७३ ॥

दृष्ट्वा तदाश्चर्यमचिन्त्यरूपं चक्रभ्रमारूढ इ[3]वाप्ररूढः ।
प्रौढोऽपि मूढत्वमिवानुभूय शनैः स संप्राप्तधृतिः प्रदध्यौ ॥ ७४ ॥

अहो नु नानाद्भुतविभ्रमाणां हर्ता च कर्ता च सदैव कालः ।
येनानिशं दर्शयता विचित्रं निपीतमन्यद्धत वान्तमन्यत् ॥ ७५ ॥

क्षणं विचिन्त्येति ययौ पुरीं स्वामनित्यतानष्टधृतिर्दशास्यः ।
गिरेर्वि[2]योगादचलं द्वितीयमिवोद्वहन्विस्मयभारमन्तः ॥ ७६ ॥

गते निगीर्णाद्भुतचक्रवाले काले विशाले बहुमोहजाले ।
स्मृत्वा समारुह्य विमानराजं तमेव देशं स पुनर्जगाम ॥ ७७ ॥

स तत्र चित्राणि पुराणि तानि न हेमहर्म्याणि न मन्दिराणि ।
स्वप्नान्तराणीव[4] कृतभ्रमाणि जन्मान्तराणीव[5] गतान्यपश्यत् ॥ ७८ ॥

---

१. 'दब्ध' ग. २. 'नियोग' ख. ३. 'इव प्ररूढः' ग-घ. ४. 'एव' क-ग-घ. ५. 'एव' क-ग-घ.

तत्रालुलोके स तमालतालतालीसहिन्तालनिरन्तरालम् ।
वनं विशालं विवलत्पियालमालावलीसंततनक्तमालम् ॥ ७९ ॥
घोरैर्घुरघ्राघ्रघनप्रघोषैरिवोच्चरोमाञ्चचयाञ्चितानाम् ।
विषङ्कटैरुत्कटकण्टकानां व्याप्तं समूहैः खदिरद्रुमाणाम् ॥ ८० ॥
अन्तःश्वसन्निश्चलदुष्टसत्त्वैः कम्पप्रदं पिप्पलपल्लवानाम् ।
तमःपिशाचाचितमर्कभासा भीत्येव दूरात्परिवर्ज्यमानम् ॥ ८१ ॥
गतेष्वभावं नगरेषु तेषु दृष्ट्वा तदुग्रं गहनं गभीरम् ।
रक्षःपतिर्ग्रस्तसमस्तलोककुलाय कालाय नमश्चकार ॥ ८२ ॥
सोऽचिन्तयत्कालविहंगमोऽयमलक्ष्यदाक्ष्यक्रमपक्षवेगः ।
दिवानिशं याति विचित्रशक्तिरहो कदाचिन्न चलत्यखिन्नः ॥ ८३ ॥
अत्युच्चापातनिम्नोन्नतिकरणपटुः श्लिष्टदूरस्थिताना-
मिष्टानिष्टव्रजानां सततमिव घनाश्लेषकेलिप्रसक्तः ।
पर्यन्ताभावभूमिप्रपतनचतुरानन्यथा सर्वभावा-
न्प्रातः प्रातर्विधत्ते नवनवरचनाश्चर्यकृत्कालपाकः ॥ ८४ ॥
इत्यद्भुतामाकलयन्नचिन्त्यां कालस्य शक्तिं स विसंस्थुलोऽभूत् ।
अनित्यताचिन्तनभङ्गभाजां नाङ्गानि केषां शिथिलीभवन्ति ॥ ८५ ॥
प्राप्तः स लङ्कां विभवोपभोगहर्षोत्सवैर्विस्मृतकाललीलः ।
मेने सुखक्षीबतयाक्षयाणि संभोगलीलाधनजीवितानि ॥ ८६ ॥
शनैः प्रयातं क्षणसंख्ययापि प्रवर्धमाने युगदीर्घकाले ।
पुनर्विमानेन तमेव देशं कुतूहलात्तः प्रययौ दशास्यः ॥ ८७ ॥
स तत्र निर्घातघनप्रवाहदीर्णोर्वरीनिष्क्रमणक्रमेण ।
ददर्श पातालमिवान्तहीनं खातं प्रजातं भुवनव्रणाभम् ॥ ८८ ॥
क्षणं तदालोकनभुग्नकण्ठः स्थित्वा प्रयातः स पदं स्वमेव ।
काले प्रयाते पुनरागतोऽथ सरः समुद्रोपममभ्यपश्यत् ॥ ८९ ॥
अनन्तपद्मान्वितमप्रमेयमुदग्रनागेन्द्रसहस्रसेव्यम् ।
परागपुञ्जेन भुजंगलोकमिवान्तराले कपिलेन जुष्टम् ॥ ९० ॥

---

१. 'निष्कुथण' क-ख, 'निष्कषण' ग.

हंसांसकण्डूयनलोलनालफुल्लारविन्दोत्थितषट्पदानाम्[1] ।
मुहुः समूहैर्विहितान्धकारं क्रोशन्निशाशङ्कितचक्रवाकम् ॥ ९१ ॥
स्वादूदकं कोमलवीचिवातं पद्मोज्ज्वलं भृङ्गगणोपगीतम् ।
ससौरभं पुण्यवतामिवैकं सर्वेन्द्रियाणामुपभोगपात्रम् ॥ ९२ ॥
सविभ्रमं श्रीरमणं परागपीताम्बरं नाभिभवाञ्चिताब्जम् ।
नीलोत्पलश्यामलमाकलय्य सरः स निःस्पन्दतनुः प्रदध्यौ ॥ ९३ ॥
अहो नु नेत्रार्पितकौतुकानि वैचित्र्यमैत्रीकृतविस्मयानि ।
पिबत्ययत्नेन कियन्ति कालः सृजत्यजस्रं च महाद्भुतानि ॥ ९४ ॥
क्षणं विचिन्त्येति लसद्विवेकः स शंकरार्चारससादरोऽभूत् ।
अनित्यताचिन्तनखेदजन्मा न सद्विचारः कुशलाय कस्य ॥ ९५ ॥

अयःपिण्डक्रूरं श्रयति न मनः क्वापि मृदुतां
न यावत्संस्पृष्टं सकलभवभावक्षयधिया ।
मनाक्तस्मिन्याते प्रशमलव[2]पाकप्रणयितां
नमत्येतत्कस्य द्विजगुरुहरार्चासु न शिरः ॥ ९६ ॥

सरस्तटे टङ्कितरत्नपीठे लिङ्गं विधाय स्फटिकाद्रिशृङ्गम् ।
सपुष्पकोपाहृतदिव्यपद्मैरर्चां चकारामृतरश्मिमौलेः ॥ ९७ ॥
स त्र्यम्बकस्याम्बरचुम्ब्यमानां विधाय पूजां कमलोपचारैः ।
हृदस्य विष्णोरिव मध्यजातं समादधे(दे) मूर्ध्नि विधातुमब्जम् ॥ ९८ ॥
तस्यान्तरे काञ्चनकर्णिकस्य विचित्ररत्नोज्ज्वलपल्लवस्य ।
स दिव्यपद्मस्य ददर्श कन्यां तद्भीतिलग्नामिव जात(तु)-लक्ष्मीम् ॥९९॥
आदाय कन्यां कमलं विधाय तच्चन्द्रचूडस्य किरीटकोटौ ।
प्रीतिं वहन्विस्मयगर्भगुर्वीं लङ्केश्वरः स्वां नगरीं जगाम ॥ १०० ॥
मन्दोदरी तद्दयिताथ तत्र तेनार्पितां कल्पितपुत्रिकां ताम् ।
अनन्यलावण्यवतीं विलोक्य कन्यामभूद्विस्मयनिश्चलेव ॥ १०१ ॥
कदाचिदुत्सङ्गगृहीतकन्यां तां नारदोऽभ्येत्य मुनिर्जगाद ।
पत्युस्तवेयं चपलेन्द्रियस्य कन्या भविष्यत्यभिलाषभूमिः ॥ १०२ ॥

---

१. 'विन्दोदित' क-ग. २. 'भव' क.

श्रुत्वैतदाच्छाद्य महार्हपट्टैः सुवर्णमञ्जूषधृतां कुमारीम् ।
मन्दोदरी भूमितलावखाते तत्याज रत्नाकरपारतीरे ॥ १०३ ॥
काले प्रयाते जनकेन राज्ञा यज्ञाङ्गने हैमहलेन कृष्टे ।
लब्धा समृद्धेन्दुमुखी सुता सा सीतेति नाम्ना भुवने प्रसिद्धा ॥ १०४ ॥
ततः कदाचिन्मणिमन्दिरस्थं दशाननं शूर्पणखाभ्युपेत्य ।
सद्यःप्रकृत्ताखिलकर्णनासा स्वसा श्वसन्ती विजने जगाद ॥ १०५ ॥
अहो प्रमादस्तव दुर्जयस्य जगत्त्रयीराज्यजयोर्जितस्य ।
यत्त्वं प्रजातारिनवाङ्कुरोऽपि धत्से सुखी क्षीब इवातिनिद्राम् ॥१०६॥
मन्त्रद्विषः शक्तिमदेन यस्य निश्चेतनस्येव दिनानि यान्ति ।
दुर्वृत्तगोष्ठीपतितेव पत्नी न तत्र तिष्ठत्यपरोन्मुखी श्रीः ॥ १०७ ॥
रामः पितुर्निश्चलशासनेन भ्रात्रा जटाभृत्सह लक्ष्मणेन ।
सीताख्यया चारुदृशा च पत्न्या धन्वी वने दाशरथिः स्थितोऽस्ति १०८
यस्याङ्गना सा सुरसिद्धसाध्यगन्धर्वविद्याधरसुन्दरीणाम् ।
साश्चर्यसौन्दर्यमदं वहन्ती दृष्टा मया त्वद्भवनोचितैव ॥ १०९ ॥
तां त्वत्कृते हर्तुमहं प्रवृत्ता यावन्मनोजन्मजयप्रशान्ति(शस्ति)म् ।
रामानुजात्तावदयं मयाप्तः पराभवः कर्तितकर्णनासः ॥ ११० ॥
मन्मन्युशल्यव्यथयाभिभूताः सुरासुरश्रीहरणप्रगल्भाः ।
त्वद्भ्रातरस्ते खरदूषणाद्या रामेण सर्वे निहताःससैन्याः ॥ १११ ॥
सुखोन्मुखः कृष्णभुजङ्गमोऽपि विषोष्मशान्त्यै बिलवेश्मशायी ।
पिपीलकेनोदररन्ध्रयुक्त्या विदार्यते निश्चलकल्प एव ॥ ११२ ॥
आगुप्तचारः स्वपरप्रदेशे जगत्त्रयीराज्यगृहीतभारः ।
अहो प्रसिद्धां भुवनत्रयेऽपि त्वं दण्डकारण्यकथां न वेत्सि ॥ ११३ ॥
इति स्वसुर्मर्मविदारणोग्रां श्रुत्वा गिरं दुर्विषहां दशास्यः ।
जवेन पारं जलधेर्जगाम कालेन कामेन च कृष्यमाणः ॥ ११४ ॥

१. 'भूमितले सुखाते' ख. २. 'भूमितले निकृष्टे' ख. ३. 'सुखक्षीब' ख-घ. ४. 'प्रच्युत' ख. ५. 'अनुप्त' क-ग-घ.

स प्राप्य मारीचममात्यमुख्यमरण्यपर्यन्ततपःप्रसक्तम् ।
न्यवेदयन्मर्त्यविकारमस्मै सीतापहारव्यसनोद्यमं च ॥ ११५ ॥
लक्ष्मीशरीरक्षपणाभियोगे गाढानुबन्धेन मदप्रमूढम् ।
[1]साचिव्यमन्त्रावधियाच्यमानो विचार्य मारीचमुनिस्तमूचे ॥ ११६ ॥
अहो बतायं तव मोहमन्त्रः स्वतन्त्रवाचा च्युतनीतितन्त्रः ।
किं शत्रुणा पुत्रकलत्रमित्रदेहापहारी व्यसनाय दत्तः ॥ ११७ ॥
धूर्तैर्[2]यदुक्तं हृदयग्रहाय निन्द्यं मदोत्तुङ्गमसङ्गतं च ।
तदीश्वराणां परिणामकष्टं निर्दिष्टदुर्वेदमनिष्टमिष्टम् ॥ ११८ ॥
[3]सर्वापकारः सुकृतप्रहारः क्लेशावतारः कुशलापसारः ।
शीलापचारः कुपदाभिसारः पापप्रकारः परदारहारः ॥ ११९ ॥
पथ्यं न जिघ्रन्त्यथ चर्वयन्ति स्पृशन्ति शृण्वन्ति विलोकयन्ति ।
विनाशकाले चपलेन्द्रियाणां सर्वेन्द्रियाणीव पुरः प्रयान्ति ॥ १२० ॥
रामस्य हर्तुं कथमिच्छसि त्वं पत्नीमयत्नक्षतराक्षसस्य ।
यद्धीतिनीत्यैवं[4] तपस्ततं मे क्व रक्षसामस्ति विवेकपाकः ॥ १२१ ॥
　　जातः कृती ततत[5]पश्चयऋष्यशृङ्ग-
　　　मन्त्राहुतिप्रसृत[6]यौगविधिप्रभावात् ।
　　पृथ्वीपतेर्दशरथस्य पितुर्नियोगा-
　　　द्यः कौशिकस्य मखरक्षणदीक्षितोऽभूत् ॥ १२२ ॥
शूरः शिशुः कौशिकशासनेन मन्मातरं वर्त्मनि ताटकां यः ।
हत्वा प्रपेदे मुनिना वितीर्णां सजम्भकामस्त्ररहस्यविद्याम् ॥ १२३ ॥
　अस्त्रोद्यत्पक्षपातैः कुशिकसुतमखत्राणसज्जस्य यस्य
　　प्रक्षिप्तो योजनानां शतमुदधितटे मूर्छितः [7]प्रच्युतोऽग्रे ।
　वृक्षेष्वद्यापि बाणासनचकितभिया रामनामादिवर्णे
　　राकारामादिशब्देष्वकृतभयसमयान्न क्वचिन्निर्वृतिर्मे ॥ १२४ ॥

---

१. 'स दिव्यमन्त्रावधियाचमानं' ख. २. 'सूतैः' ख, 'दूतैः' घ. ३. 'सर्वापहारः सुकृतापकारः' ख. ४. 'नेत्येव' क, 'निन्येव' ग, 'नीज्येव' घ. ५. 'तपःस्थित' क-ग. ६. 'योग' क-ग. ७. 'प्रत्युताग्रे' ख.

यः प्राप यज्ञे जनकस्य पुत्रीं चण्डीशचापाक्रमणेन सीताम् ।
नीतां त्रिलोकीविजयाशयेव शक्तित्वमेतां कुसुमायुधेन ॥ १२९ ॥

आकर्णाकृष्टभङ्गोद्भवरवमुखरोच्चण्डचण्डीशचाप-
क्रोधाध्मातस्य सर्वक्षितिपवधविधेर्द्वन्द्वयुद्धातिथिर्यः ।
चापश्रीकुञ्चनेन व्यधित भृगुपतेः सर्वधर्मस्य गोप्ता
पुण्यब्राह्मण्यजन्मापचयपरिचयक्षत्त्रवृत्तेर्निरोधम् ॥ १२६ ॥

यः सत्यपाशग्रथितस्य मुक्त्यै पितुर्गिरा निर्जनसंश्रयाय ।
ययावरण्यं सह लक्ष्मणेन भ्रात्रा समानव्रतया च पत्न्या ॥ १२७ ॥

वियोगशोकात्पितरि प्रतप्ते स्वर्गं प्रयाते भरतेन यत्नात् ।
अभ्यर्थ्यमानोऽपि निजं न राज्यं जग्राह रामः स्थिरसत्यकामः ॥ १२८ ॥

तत्पादुके मूर्ध्नि निधाय धीमान्करोति शत्रुघ्ननिषेव्यमाणः ।
राज्यं जटाभृद्भरतस्तदीयं वनान्तवासावधि तत्प्रदिष्टम् ॥ १२९ ॥

सहायतां ते कुपदे करोमि कथं शरीरप्रतिकूलकार्ये ।
अकुर्वतस्त्वद्विशिखैर्विनाशः कृतस्तु रामान्निधनं वरं मे ॥ १३० ॥

श्रुत्वेति मारीचवचः प्रहृष्टस्तं राक्षसेन्द्रः प्रथमं विसृज्य ।
मायानिधानं स्वविनाशसज्जः पश्चाद्ययौ कल्पितभिक्षुवेषः ॥ १३१ ॥

अर्थानर्थक्षयभयजयान्सर्वथा वेत्ति सर्वः
श्रेयः प्राप्तुं किमपि यतते वर्जयत्येव दोषान् ।
तज्ज्ञोऽप्यन्ते पतति विवशः क्लेशशोकार्तिगर्ते
दैवादिष्टे पतनसमये लङ्घने कस्य शक्तिः ॥ १३२ ॥

अथ कनककुरङ्गं विद्रुमोत्तुङ्गशृङ्गं
रुचिरमणिविचित्रं लोचनानन्दमित्रम् ।
द्युतिमिव विकिरन्तं संनिकर्षे चरन्तं
जनकनृपतिपुत्री कौतुकात्तं ददर्श ॥ १३३ ॥

तच्चर्मलोभात्प्रणयप्रयत्नैरभ्यर्थितो मैथिलराजपुत्र्या ।
धृत्वाश्रमे लक्ष्मणमात्तचापः ससार सारङ्गवधाय रामः ॥ १३४ ॥

१. 'शापात्' ख. २. 'विरोधम्' क-ग, 'निषेधम्' ख. ३. 'विधाय' क-ख-ग.

मायामृगस्तीक्ष्णतराननेन स पत्रिणा रामधनुश्च्युतेन ।
विद्धः पतन्राक्षसरूप एव हा लक्ष्मणेत्यार्तरवं रुराव ॥ १३५ ॥
श्रुत्वा प्रलापं सहसैव सीता भर्तुर्विरुद्धं परिशङ्कमाना ।
उत्कम्पिताङ्गी विससर्ज यत्नात्ससंभ्रमं लक्ष्मणमीक्षितं तम् ॥ १३६ ॥
अभ्येत्य सीतामथ कूटभिक्षुर्दशाननश्चन्द्रमुखीं ददर्श ।
सुरासुराणां कलहोपशान्त्यै सुधां सदेहामिव निर्जनस्थाम् ॥ १३७ ॥
प्रणामिनीं स्वागतवादिनीं तां पाद्यासनातिथ्यविशेषसज्जाम् ।
उवाच कौटिल्यनिलीनमायः प्रच्छन्नकायः क्षणदाचरेन्द्रः ॥ १३८ ॥

लावण्यं सकलाङ्गसङ्गसुभगं माधुर्यधुर्यं वच-
स्तीक्ष्णान्ता नयनद्वयी च सुतरां प्रान्ते कषायच्छविः ।
मूर्तिः कान्तिसुधाचिता रसमयी चित्रं चमत्कारिणी
यत्नेनाप्यभिलक्ष्यमम्लकटुकं किंचिन्न ते चेष्टितम् ॥ १३९ ॥

एकाकिनी निर्जनकाननेऽस्मिन्करोषि किं रत्नविमानयोग्या ।
घोरं घुरद्व्याघ्रगुहाग्रमेतत्कस्मात्तवेष्टं विषमाश्मकाष्ठम् ॥ १४० ॥

एता निर्भरदर्भसूचिनिचयैर्दुःसंचरा भूमयः
क्षुत्क्षुण्णाजगरोग्रकोपविषमश्वासोष्मशुष्यद्द्रुमाः ।
ग्रीष्मग्लानिनिमग्नमत्तमहिषश्लिष्यत्करीषोन्मिष-
त्पङ्कव्याकुलविक्लवत्तृणकुलक्लेदातितिक्तं पयः ॥ १४१ ॥

दिव्या रत्नहिरण्यहर्म्यरुचिरा रम्या तव श्रीसखी -
लङ्का स्फाटिकमन्दिरांशुनिवहैः स्वर्गं हसन्ती मुहुः ।
तस्याः सुभ्रु विभात्यशोकवनिकालंकारभूता मरु-
त्वङ्गत्कल्पलतापरागपटलीसंसर्गरङ्गारतिः ॥ १४२ ॥

जगज्जयोद्योगरणाङ्कितश्रीलङ्काधिनाथः प्रणयी तवाहम् ।
यं त्रासलोलांशुकपल्लवाङ्गा भ्रूभङ्गभग्नास्त्रिदशा नमन्ति ॥ १४३ ॥

---

१. 'विद्धोऽपतत्' ख. २. 'आर्तरवैः' ख-ग. ३. 'तत्' क-ग-घ. ४. 'क्लिश्यत्' क-ग. ५. 'विक्लवतृण' क-ग-घ. ६. 'श्रीमुखी' ग. ७. 'संसङ्ग' क-ग-घ.

श्रुत्वैतदुक्तं दशकंधरेण भयेन कोपेन च कम्पमाना ।
जगाद जिह्मं जनकात्मजा तं समुद्भवद्बाहुशिरःसहस्रम् ॥ १४४ ॥
अहो प्रशान्तव्रतकष्टकूटस्त्वं शष्पसंछन्न इवान्धकूपः ।
पापाप्लुतं जल्पन जल्पतस्ते किं नाम भूमौ पतिता न जिह्वा ॥ १४५ ॥
इति ब्रुवाणां कपटाकृतिस्तां करेण मातङ्गनिभः प्रमाथी ।
आकृष्य रम्भामिव वेपमानां जहार मत्तः पिशिताशनेन्द्रः ॥ १४६ ॥
तारप्रलापां शरणैषिणीं तां दयाभिमानी न ररक्ष कश्चित् ।
प्रायः स्वरक्षाप्रणयी जनोऽयं परार्तिकाले विरलप्रयत्नः ॥ १४७ ॥
सीतां हरन्तं रजनीचरेन्द्रं लतामिवोग्रानिलमम्बरेण ।
धीरः कृपावानरुणस्य सूनुरभ्याद्रवद्गृध्रपतिर्जटायुः ॥ १४८ ॥
निकृत्तवर्मायुधमौलिवाहं कृत्वा दशास्यं नखचञ्चुपक्षैः ।
दैवप्रमाणे विजये जटायुर्जुहाव जीवं निजमाजिवह्नौ ॥ १४९ ॥
जायन्ते निधनं प्रयान्ति सततं जन्मभ्रमे जन्तवः
कोऽप्येकः किल जायते स सुकृती यः पीतपुण्यामृतः ।
आर्तत्राणपवित्रितेन तृणवन्नीतेन जातु व्ययं
व्याप्ताशेषयशोमयेन वपुषा कल्पस्थितिर्जीवति ॥ १५० ॥
लङ्काधिनाथः समुपेत्य लङ्कामशोकनाम्नीं वनिकां प्रविश्य ।
न्यवेशयन्मैथिलजां क्षयाय कुलस्य मानस्य च जीवितस्य ॥ १५१ ॥
दिनेषु यातेष्वथ रामवृत्तं ज्ञातुं विसृष्टः प्रणिधिर्निगूढः ।
सुकेतुनामा दशकंधरेण विज्ञाय सर्वं स समाजगाम ॥ १५२ ॥
स तापसव्यञ्जनरञ्जितेन वेषेण लङ्कापतिमभ्युपेत्य ।
स्वैरं बभाषे भुवनत्रयेऽपि समस्तकार्येषु[2] कथान्तरज्ञः ॥ १५३ ॥
न युज्यते वक्तुमसंमतं यन्न[1] चाहितं न प्रकटं न गुप्तम् ।
प्रायः प्रभूणामतिसंनिकर्षः क्षुराग्रधारे[3] नैवपादचारः ॥ १५४ ॥
श्रुतं च दृष्टं च निवेद्यमानं सत्यं वचः प्रीतिकरं न[4] राज्ञाम् ।
तुष्यन्ति भूपाः स्तवकस्तवेन शून्येन वेश्याप्रणयोपमेन ॥ १५५ ॥

१. 'जाल्म न' क. २. 'कृत्येषु' ख. ३. 'व्रन' ग-घ. ४. 'नराणाम्' ख.

कर्णानुकूलं हृदयग्रहाय यदुच्यते तत्क्षणदृश्यदोषम्।
वाल्लभ्यभावप्रभवाय भृत्यैर्द्रोहप्रकारः परमं प्रभूणाम्॥ १५६॥
सहायहीनस्य पदच्युतस्य क्षामस्य कान्ताविरहान्वितस्य।
रामस्य वृत्तं शृणु देव सर्वं श्रुत्वा विचार्य क्रियतां हितं यत्॥१५७॥
हत्वा स मारीचममेयमायं त्यक्त्वाश्रमं लक्ष्मणमाप्तमग्रे।
विलोक्य सीताहरणाभिशङ्की ध्यात्वापतत्तन्मुखदत्तदृष्टिः॥ १५८॥
दृष्ट्वाश्रमं शून्यमचिन्तितोग्रशोकाभिघातात्तमुहूर्तमोहः।
आसाद्य संज्ञां शनकैः प्रपेदे चक्रभ्रमारूढ इवाकुलत्वम्॥ १५९॥
जटायुषस्तत्क्षणमुक्तजीवशेषस्य कृत्वान्त्यविधिं विधिज्ञः।
तद्दुःखतापं दयिताविप्रयोगे रामः क्षते क्षारमिवाससाद॥ १६०॥

शैले शैले स्थलजलबिलप्रायपुञ्जे निकुञ्जे
कृत्वा कृत्वा हृदयमसकृज्जीविताशाविहीनम्।
शोकेनान्तर्विहितवसतिः प्रस्खलद्बाष्पवर्षी
रामः सीतां धृतिमिव वने हारितां नाससाद॥ १६१॥

सरः फुल्लैर्व्याप्तं विकचकुमुदेन्दीवरवनै
रजःपुष्पालेख्यं स खलु निखिलेन्दुद्युतिमुखः।
वहन्नन्तर्द्वेषादिव कमलखण्डेषु विमुखः
क्षपामन्तश्चक्राह्वयसदृशवृत्तिः समनयत्॥ १६२॥

दृष्ट्वा श्रियः पुत्रमवाप्तघोरकबन्धरूपं स विमोच्य शापात्।
राकावियोगग्लपितः शशीव ययौ तदुक्तेन पथा हितेन॥ १६३॥
शनैरवाप्याचलमृष्यमूकं सुग्रीवनाम्ना प्लवगेश्वरेण।
परस्पराबद्धहितप्रतिष्ठं स प्राप विख्यातबलेन सख्यम्॥ १६४॥
तस्याग्रजेनातिबलेन राज्यं हृतं समाकर्ण्य स वालिनाम्ना।
चकार मित्रोपकृतिप्रयत्नसंनद्धधीस्तन्निधने प्रतिज्ञाम्॥ १६५॥

किष्किन्धामेत्य रामः प्रथितभुजबलं वालिनं शौर्यशाली
सुग्रीवाहूतमुग्राननविशिखहतं कीर्तिशेषं चकार।

---

१. 'परमः' ख. २. 'मुञ्जे' ख. ३. 'सखल' ग-घ. ४. 'च तेन' ख. ५. 'किष्किन्दां' क-ख-ग-घ.

संनद्धः सप्तसिन्धूद्धतसलिलचयाशान्तिसंतोषवृध्द्या
संध्याध्यानाय धीरः क्षणगमनपटुर्यः सदैवात्र दृष्टः ॥ १६६ ॥
सुग्रीवं हनुमन्मुखैः परिवृतं राज्येऽभिषिच्य स्वयं
कृत्वा वालिजमङ्गदं तदनुगं तद्यौवराज्योर्जितम् ।
रामः प्रस्रवणे गिरौ समनयद्विद्युत्प्रभापिङ्गल-
श्मश्रुव्याकुलमेघसंघकलिले कालं वियोगाकुलः ॥ १६७ ॥
संरम्भोर्जितगर्जितं जलधरं क्षिप्रोद्यतां विद्युतं
खद्योतस्फुटनं कदम्बपवनं तां सस्मितां केतकीम् ।
सेहे सर्वममोघमेघचरितं रामः सुहृन्निर्मितां
सीतान्वेषणसंविदं धृतिमयीमाशां निवेश्याशये ॥ १६८ ॥
ततः प्रयाते घनमेघकाले प्रशान्तबाष्पेषु दिशां मुखेषु ।
मित्रोदयश्रीरिव हर्षहेतुः पद्माकराणां शरदाजगाम ॥ १६९ ॥
उद्योगकालेऽपि निरर्गलस्य वक्तुं सुरौघैः(?) सुहृदश्च्युतस्य ।
क्रुद्धेन सौमित्रिरथाग्रजेन ययौ विसृष्टः कपिराजधानीम् ॥ १७० ॥
श्रीभोगसक्तं दयितानुरक्तं हरीश्वरं विस्मृतमित्रकार्यम् ।
अभ्येत्य लज्जावनतं जगाद रामानुजः कोपकषायनेत्रः ॥ १७१ ॥
आश्चर्यं निजकार्यकालविनतः पर्याप्ततात्पर्यवा-
न्क्रौर्यौदार्यमनार्य वेत्सि न घनक्लेशाश्मशय्याश्रयम् ।
उच्छिष्टं पिबसि प्रियाधरदलस्यालग्नरागं मधु
प्रायेणोपकृतिः कृतघ्नहृदये पाषाणपट्टे कृषिः ॥ १७२ ॥
सोल्लासाः कृकलासकूर्मशफरोत्फालाहिजिह्वालता-
संध्यावर्णपलाशपर्णकरिणीकर्णानुकारक्षमाः ।
विद्युन्नृत्तनरेन्द्रवृत्तवनिताचित्तासवोन्मत्तधी-
दुर्नीतोन्नतिचारणस्तुतिकलालोलाः खलप्रीतयः ॥ १७३ ॥
स लक्ष्मणेनेति विडम्ब्यमानः स्वदोषवैलक्ष्यविषण्णचित्तः ।
प्रसाद्य तं संवरणप्रणामैश्चक्रे स्वसैन्यं विजयाय सज्जम् ॥ १७४ ॥

---

१. 'सोल्लासकृकलास' क-ग-घ.

नम्रः समभ्येत्य ततः कपीन्द्रः प्लवंगसङ्घैः परिपूरिताशः ।
रामं प्रसादाभिमुखं विधाय दिशो विजेतुं बलमादिदेश ॥ १७५ ॥

सीतान्वेषणशासनप्रणयिनां दर्पेण संसर्पतां
संपूर्णे भुवने कपिक्षितिभृतां सैन्येन दिग्व्यापिना ।
मेघग्रस्तमिवाम्बरं घनतमःसंघातपीतं दिनं
दिक्चक्रं च बभूव विन्ध्यशिखरप्राकारसंपूरितम् ॥ १७६ ॥

वेगेनाङ्गदमैन्द[1]नीलहनुमन्मुख्याः प्लवङ्गास्ततः
प्राप्ता दक्षिणसिन्धुमुद्धततरत्वङ्गत्तरङ्गोत्तरम्[2] ।
आलिङ्गन्तमिवाम्बरप्रणयिनीं गङ्गां दिगन्तादिभि(?)-
र्दृष्ट्वा वन्ध्यपरिश्रमाः प्रमुमुचुश्चिन्तानिमग्ना धृतिम् ॥ १७७ ॥

ततोऽब्रवीद्वालिसुतः समुद्रसंदर्शनत्यक्तजवाभिमानः ।
सीता न लब्धाब्धिरयं न लङ्घ्यः कपिप्रभोः कः सहते प्रकोपम् १७८
इहैव नस्त्यक्तपरिग्रहाणां युक्तं तपः संगलितग्रहाणाम् ।
भग्नेऽभिमाने विततेऽवमाने वनं विना भेषजमस्ति नान्यत् ॥ १७९ ॥

मिथ्यापुत्रकलत्रमित्रभरणारम्भाभियोगग्रहै-
राशापाशजुषां प्रभुप्रणयिनां सेवाव्रतैः शुष्यताम् ।
अन्ते हन्त दिशन्ति संततमहामोहप्ररोहावहा
वेश्या[3]विभ्रमचञ्चला भ्रममदोन्मत्तक्रमं संपदः ॥ १८० ॥

धन्यो जटायु[4]र्जगति प्रवीरो जीवत्यलोभोज्झितजीवितोऽपि ।
छिन्नस्य यस्योचितराजकार्ये लोके प्ररूढा किल कीर्तिलक्ष्मीः ॥१८१॥
इत्यङ्गदेनाभिहिते समीपं संपातिनामा शनकैरवाप्तः ।
प्लवंगमान्गृध्रपतिर्जगाद नवोद्भवत्तत्क्षणलक्ष्यपक्षः ॥ १८२ ॥
भ्राता जटायुर्मम पूर्वमर्कपथे व्रजन्मत्स[5]हितो जवेन ।
स्पर्धानुबन्धी स मया स्वपक्षैः संरक्षितः प्रज्वलिताखिलाङ्गः ॥ १८३ ॥

---

१. 'सेन्द्र' क-ख. २. 'तरङ्गोद्धतम्' क-ग-घ. ३. 'वेशाविभ्रममाशु शोकानिवहं विद्युद्विलोलाः श्रियः' ख. ४. 'जटायुः सफलाततायुः' ख. ५. 'व्रजन्सत्त्वहितो मदेन' क.

निर्दग्धपक्षं पतितं क्षितौ मां दिवाकराख्यो मुनिरित्युवाच ।
भविष्यसि प्रौढगतिः सपक्षस्त्वं रामवृत्तामृतपूर्णकर्णः ॥ १८४ ॥
इहाद्य मे रामकथामृतेन पक्षैः प्रजातैर्विगतः स शापः ।
पश्यामि लङ्कोपवने निरुद्धां सीतां निगद्येति जगाम गृध्रः ॥ १८५ ॥
महामतेर्जाम्बवतो मतेन प्लवंगमैः सादरमङ्गदाद्यैः ।
अभ्यर्थितोऽब्धेस्तरणेऽभिमानी समीरसूनुर्ववृधे हनूमान् ॥ १८६ ॥
महेन्द्रमारुह्य गिरिं स पादभरेण गुर्वीकृतमुत्पपात ।
आदातुमिच्छन्निव नाकचुम्बि दिनेशबिम्बं पुनरम्बराग्रात् ॥ १८७ ॥

स्वच्छाम्बुप्रतिबिम्बितेऽस्य वपुषि क्रूरप्रकोपाकुलै-
र्दंष्ट्राकोटिविपाटनेन मकरैर्मिथ्याभियोगे कृते ।
दूरोद्गारितदूरुवातविधुतस्फीतैस्[1]तटाम्बुस्फुट-
च्छुक्तिव्यक्तसटैर्जहास जलधिर्मुक्तासमूहैर्मुहुः ॥ १८८ ॥

व्रजन्स धीरः शतयोजनान्तं क्रमेण तद्ग्रासविवर्धितास्याम् ।
जघान घोरामथ सिंहिकाख्यां क्षपामिवार्कस्तमसो जनित्रीम् ॥ १८९ ॥
मानाय मेनाकमथार्णवेन विश्रान्तये रत्नगिरिं विसृष्टम् ।
करेण संस्पृश्य स लङ्घिताब्धिर्लङ्काङ्कशैलस्य तटे पपात ॥ १९० ॥

अथ निशि शशिहासोल्लासशुभ्रासु दिक्षु
स्फुटमणिकिरणेषु(ष्वे?)तत्प्रियान्तःपुरेषु ।
प्रतिपदमतियत्नात्तेन सर्वं विचित्य
द्रुततरमभिपत्य स्वैरमाभाष्य सीताम् ॥ १९१ ॥
सुरतरुर्वनिकाया[2] मूलभङ्गं विधाय
प्रविधुतकुलशैलान्किंकरान्मन्त्रिपुत्रान् ।
सुरपुरभयदीक्षादक्षमक्षं च हत्वा
स्वयमभिसरता तामिन्द्रजिद्युद्धभूमिम् ॥ १९२ ॥
तृणमिव वहता तच्छद्मना ब्राह्ममस्त्रं
हुतवहहुतलङ्कातङ्कनिःशङ्कशक्त्या ।

१. 'तटान्त' ख. २. 'वनिकायां' क-ख-ग.

कृतमिह कपिना यत्तच्च देवेन दृष्टं
तदपि कुमतिसृष्टं दैवदिष्टं न नष्टम् ॥ १९३ ॥ (तिलकम्)
यद्भक्तियुक्तं विनय[1]प्रमुक्तं विज्ञाप्यसे शक्तिलवेन देव।
आकुञ्चितभ्रूभ्रमकारि वक्रं न तत्र कार्यं स्वहितं विचार्यम् ॥ १९४ ॥
श्रुत्वैतदुक्तं प्रणधिव्रतेन रक्षःपतिः क्ष्मां क्षणमीक्षमाणः।
न किंचिदूचे चरणाञ्चलेन समुल्लिखन्स्फाटिकपादपीठम् ॥ १९५ ॥
अथ प्रभाते किल मन्त्रिमु[2]ख्यनिषेव्यमाणं क्षणदाचरेन्द्रम्।
भ्राता सभाग्रस्थितमभ्युपेत्य विभीषणः सं[3]प्रति तं बभाषे ॥ १९६ ॥
अत्यल्पकेऽपि व्यसनांशलेशे न संवृतिर्यैः क्रियते प्रयत्नात्।
तेषां प्रमादादवमानपूर्णाः सक्तापवादा विपदो भवन्ति ॥ १९७ ॥
न धीमतां धावति धीः कुकार्ये क्षणादकार्याद्विरमन्ति भव्याः।
कुर्वन्त्यकार्यं विरमन्ति नैव हितं न शृण्वन्ति च दैवद[4]ग्धाः ॥ १९८ ॥
पराभवं यत्स कपिस्तवापि चकार सोऽयं कुनयप्रभावः।
सीतापहारप्रभवावमाने तत्त्याग एव प्रशमाभ्युपायः ॥ १९९ ॥
अहो नु चारैर्न निवेदितं भो रामः समुद्रस्य तटीमवाप्तः।
यद्भृत्यसुग्रीवविधौ विधेयः स मारुतिस्तत्पृतनापदातिः ॥ २०० ॥
प्रसाद्यतामात्महिताय रामः सीतार्पणेनैव स शान्तिमेति।
अयं प्रमादस्य शरावपातः(?) सीतापरित्यागकरावलम्बः ॥ २०१ ॥
हितं तवैते न वदन्त्यमात्यास्त्वकूलताधीनविभूतिभो[5]गाः।
चित्तग्रहाय प्रियतामवाप्तुं कर्णानुकूलं कथयन्त्यतथ्यम् ॥ २०२ ॥
सत्ये शङ्काचकितमतयो वञ्चकग्रामलीनाः
शैलस्थूलोपकृतिविफलाः स्वल्पदोषेऽतिकोपाः।
मन्त्रोद्विग्नाः पिशुनवचना धर्मनर्मोक्तिदु[6]ष्टाः
साधुद्विष्टाः प्रखलसुहृदः सर्वदा भूमिपालाः ॥ २०३ ॥

---

१. 'विनति' ख. २. 'मुख्यैः' ख. ३. 'संप्रहितं' क-ग. ४. 'दुग्धाः' ख. ५. 'योगाः' ख. ६. 'दुष्टाः' ख.

इति ब्रुवाणं कुशलानुबन्धाद्विभीषणं भ्रूभ्रमणप्रकोपः ।
आकृष्य खड्गं चरणाञ्चलेन न्यपातयन्निर्विकृतिं दशास्यः ॥ २०४ ॥
स वेत्रिभिस्त्रासितसर्वलोकैर्निष्कासितः सज्जनसंश्रयार्थी ।
गुणाभिसारी गगनं विगाह्य जगाम रामस्य समीपमेव ॥ २०५ ॥
अन्येद्युरन्तःपुरसौधशृङ्गस्थितं समेत्य प्रणिधिर्दशास्यम् ।
सुग्रीवसैन्यार्णवमध्यचारी जगाद विज्ञातसमस्ततत्त्वः ॥ २०६ ॥
इतः प्रयातस्य विभीषणस्य प्रणामिनः पादनखांशुपट्टम् ।
रामेण मौलौ प्रविसार्य दत्तो लङ्काधिपत्ये प्रथमाभिषेकः ॥ २०७ ॥
मन्त्रान्तरङ्गत्वमतीव यातः स तस्य निर्व्याजहितोपदेष्टा ।
न बान्धवत्वं सहजं जनस्य स एव बन्धुः किल योऽनुरक्तः ॥ २०८ ॥
विभीषणस्यानुमते त्रिरात्रं रामेऽब्धितीरेऽथ कृतव्रतेऽपि ।
गाम्भीर्यनिःस्पन्दतयाम्बुराशिर्न किंचिदूचे तरणाभ्युपायम् ॥ २०९ ॥
रामस्य चापाक्रमणेन सिन्धुर्भयादथामन्यत सेतुबन्धम् ।
मृदोरवज्ञामुखभङ्गकारी लोकः किलायं भयभोज्य एव ॥ २१० ॥
अथाम्बुधौ मन्दरतुल्यशैलैः सेतुर्निबद्धोऽद्भुतकृत्प्लवंगैः ।
प्रभावशक्त्या दृढनिश्चयानां शिलाः प्लवन्ते सलिले किमन्यत् ॥ २११ ॥
रक्षःकुले सेतुरभावहेतुर्दैवेन सृष्टः सलिलप्रचारः ।
नूनं स निर्विघ्नगतागताय लङ्कापदां राघवसंपदां च ॥ २१२ ॥
तीर्त्वार्णवं सेतुपथेन रामस्ततस्त्रिकूटस्य तटे निविष्टः ।
प्लवंगसैन्येन घनेन यस्य त्रस्ता इव क्वापि दिशः प्रयाताः ॥ २१३ ॥

इत्युक्त्वा प्रणिधौ मनागपसृते लङ्कापतिर्भ्रातरं
ध्यायन्मानुषसेवकं क्षतकुलं प्रम्लानमानाननः ।
संकल्पैरपि दुष्करेऽद्भुतनिधौ सेतौ निबद्धेऽम्बुधौ
लज्जाद्वेषविमर्शकोपकलनाव्याकीर्णचित्तोऽभवत् ॥ २१४ ॥

अथोच्चचारोद्धतयुद्धशंसी भेरीनिनादः क्षणदाचराणाम् ।
शिलाहताट्टालपरम्पराणां झांकाररावश्च घनः कपीनाम् ॥ २१५ ॥

१. 'तोयाय' ख. २. 'तरणे' ख. ३. 'भीरी' क-ख-ग-घ.

युद्धे प्रवृत्ते कपिराक्षसानां द्रुमाद्रिशस्त्रास्त्रसमाहता भूः ।
पुनः प्रजाताखिलदाहशङ्का लङ्का चकम्पे भयविह्वलेव ॥ २१६ ॥

ततः प्रतीहारपतिः प्रविश्य विद्युन्मुखाख्यः क्षणदाचरेन्द्रम् ।
व्यजिज्ञपत्संगररङ्गभङ्गं प्रत्यक्षमालोक्य निशाचराणाम् ॥ २१७ ॥

देव द्वन्द्वरणे प्रसक्तसुभटे तुल्यत्वमासीत्क्षणं
रक्षोवानरसैन्ययोरथ मनाग्ग्लाने[1] बले रक्षसाम् ।
वीरेणेन्द्रजिताभ्युपेत्य निहतौ भूमौ च्युतौ राघवौ
नागास्त्रेण समावृतौ त्रिशिरसा[2] भग्नं कपीनां बलम् ॥ २१८ ॥

दिव्यप्रभावौ गरुडेन साक्षात्स्पृष्टौ विनष्टाखिलपाशबन्धौ ।
अथोत्थितौ दाशरथी वृथैव[3] किं पौरुषैर्दैवमलङ्घ्यमेव ॥ २१९ ॥

लब्धाधिकोत्साहबलैः प्लवंगैर्निपीड्यमानेषु निशाचरेषु ।
प्रहस्तधूम्राक्षमहोदराद्याः प्रोक्ता रणे मन्दबलत्वमेव ॥ २२० ॥

भग्नेऽथ सैन्ये क्षणदाचराणां मानानुबन्धादविलुप्तधैर्याः ।
हताः प्रहस्तप्रमुखाः क्रमेण ते संगरोर्वीकुलभूधरेन्द्राः[4] ॥ २२१ ॥

त्वदाज्ञया देव विबोधनाय प्रमृद्यमानोऽपि गजाश्वसैन्यैः ।
अत्यन्तनिद्रातरुणीकरालो न कुम्भकर्णो विजहाति निद्राम् ॥ २२२ ॥

श्रुत्वा प्रतीहारगिरं दशास्यः संख्ये तनुत्यागसमुद्यतोऽभूत् ।
चित्तानुवृत्तान्तसहायहीनं कस्येष्टमैश्वर्यमरण्यतुल्यम् ॥ २२३ ॥

स्नानार्चनादि प्रविधाय तूर्णं कार्यानुरोधादथ कुम्भकर्णः ।
श्रुत्वाखिलं रामविरोधवृत्तं पौलस्त्यमेत्य प्रणतोऽभ्युवाच ॥ २२४ ॥

अहो महान्दुःसहदुर्ग्रहोऽयं सन्मन्त्रिमन्त्रैर्न निवारितस्ते ।
क्रोधेन्धने किं भवता सराज्ञौ हुता विभूतिर्गणिता न नीतिः ॥२२५॥

लीलानिबद्धाम्बुधिमध्यसेतोः शक्तिर्मनुष्यस्य न चिन्तिता किम् ।
भ्रूभङ्गभीतिस्तिमिताम्बुराशौ यस्याज्ञया भूमिधराः प्लवन्ते ॥ २२६ ॥

---

१. 'म्लाने' क-घ. २. 'च सहसा' ख. ३. 'तथैव' ख. ४. 'मदोद्धतास्ते विविशू रणोर्वीम्' ख-ग-घ.

स दीर्घदर्शी हितकृन्मनीषी विभीषणः किं भवता निरस्तः ।
मन्त्रागमज्ञं प्रथमं निहत्य पश्चाद्विषं भक्षितमप्रमेयम् ॥ २२७ ॥
व्यसनपतनसक्तिस्तद्विरामेऽप्यसक्ति-
र्हितसचिवविरक्तिर्दुर्जनेष्वेव भक्तिः ।
उचितमतिवियुक्तिर्दुर्ग्रहाणाममुक्तिः
क्षितिपरिवृढलक्ष्मीसंक्षये लक्षणानि ॥ २२८ ॥
श्रुत्वानुजोक्तं हितयुक्तमेतन्नक्तंचरेन्द्रो न विवेद युक्तम् ।
निपातकाले किल नैव बुद्धिर्भवेद्यया मोहरजोविशुद्धिः ॥ २२९ ॥
स तं जगाद प्रतिबोधितोऽद्य शिक्षाप्रदानाय न पण्डितस्त्वम् ।
मिथ्या भुजौ भूरिभुजस्तवेमौ भजस्व गत्वा घनमोहनिद्राम् ॥ २३० ॥
इत्यग्रजेनाभिहितो विचिन्त्य प्रभावशक्तिं भवितव्यतायाः ।
संनद्धबुद्धिर्निधने रिपूणां न कुम्भकर्णस्तमुवाच किंचित् ॥ २३१ ॥
संप्राप्ते कुम्भकर्णे रणभुवमभवायाससंमन्त्रितानां
भग्ने सैन्ये कपीनां दिशि दिशि रजसा भूयसा संवृतायाम्[1] ।
तत्कायच्छाययाधो जगति गुरुतरैः संनिरुद्धेऽन्धकारै-
रर्के साकारराहुग्रहणसमयधीः खेचराणां बभूव ॥ २३२ ॥
ततः प्रविश्याविरलप्रहारो विदीर्णकायः स्रुतशोणितौघः ।
नक्तंचरः कुञ्जरकर्णनामा व्यजिज्ञपत्संसदि राक्षसेन्द्रम् ॥ २३३ ॥
देव त्वदाज्ञापरुषाक्षराणि ध्यायन्कपीनां युधि कुम्भकर्णः ।
चक्रे महन्मन्युमनन्तमन्तः प्रारब्धकल्पान्तकृतान्तलीलः[2] ॥ २३४ ॥
भग्नाशङ्कं दधाने जगति[3] स गगनासङ्गितुङ्गोत्तमाङ्गः
पद्भ्यां भूकम्पकारी भयनिबिडमिलद्वारणायूंषि पिंषन् ।
सुग्रीवं विग्रहोग्रं लघुविहगमिवादाय मुष्टिग्रहेण
ग्रीवाकर्षैर्बभञ्ज द्रुमवदवगतिव्याहतानङ्गदाद्यान् ॥ २३५ ॥
क्षिप्रं विभीषणमतेन निकृष्टचाप-
स्तं राघवः स्वकटकोपरि भूधराभम् ।

---

१. 'संवृतानाम्' ख. २. 'प्रारम्भ' ख. ३. 'त्रिजगति' ग-घ.

बाणैर्निपात्य घनकायभरावपिष्ट-
रक्षःकुलं भुवनविस्मयमाततान ॥ २३६ ॥
हते विकीर्णे युधि कुम्भकर्णे निकुम्भकुम्भादिषु च च्युतेषु ।
मानानुबन्धादपराङ्मुखानां क्षणं क्षयोऽभूत्क्षणदाचराणाम् ॥ २३७ ॥
शोकप्रकोपानललिह्यमानः कुलक्षयादिन्द्रजिदभ्युपेत्य ।
सैन्यं कपीनां निखिलं क्षणेन स रामसुग्रीवमुखं जघान ॥ २३८ ॥
हतेषु सर्वेषु हरीश्वरेषु कण्ठावकीर्णक्षणजीवितेन ।
अभ्यर्थितो जाम्बवता हनूमानेको विसृष्टः कपिजीविताप्त्यै ॥ २३९ ॥
स योजनशतत्रयीं दिवि विलङ्घ्य भास्वत्प्रभः
सपुष्करमपाहरत्सकलमौषधिक्ष्माधरम् ।
यदग्रसरसौरभैरभवदाप्तजीवं क्षणा-
त्सराघवकपीश्वरं हरिसुसैन्यमत्यद्भुतम् ॥ २४० ॥
मानं नेच्छति यच्छति व्यसनितां मुग्धां विधत्ते धियं
कीर्तिं हन्ति कलङ्कयत्यपि कुलं सोत्कर्षविद्वेषवान् ।
यद्यत्कर्म विधीयते सुमतिना कार्यानुबन्धोद्यमै-
स्तत्तत्सर्वमलक्षितः क्षपयति क्षिप्रं विरुद्धो विधिः ॥ २४१ ॥
अथेन्द्रजित्सर्वजगज्जयोग्रब्रह्मास्त्रसिद्ध्यै विहितापचारः ।
वनं समागत्य निकुम्भिलाख्यं यागोग्रवह्नौ रुधिरं जुहाव ॥ २४२ ॥
यागार्धविघ्ने युधि वध्य एष नैवान्यथेत्याशु विभीषणेन ।
उक्ते हिते राघवशासनेन तं लक्ष्मणो योद्धुमथाजगाम ॥ २४३ ॥
अथेन्द्रजिल्लक्ष्मणयोर्मदेन युद्धे प्रवृत्ते कपिराक्षसानाम् ।
परस्परं दीर्घमहास्त्रदीप्तं सैन्यद्वयं प्रेक्षकतामवाप ॥ २४४ ॥
क्रोधाकुलेनेन्द्रजिता प्रसह्य शक्त्याथ हृन्मर्मणि दारितोऽपि ।
तं पत्रिणा कण्ठनिकृत्तवक्त्रं सौमित्रिराश्चर्यनिधिश्चकार ॥ २४५ ॥
श्रुत्वैतदुग्राशनिपाततुल्यं शोकेन निर्भिन्नधृतिर्दशास्यः ।
व्याप्तः स्फुटद्भिः कटकाग्ररत्नैः पपात कल्पान्त इवाचलेन्द्रः ॥ २४६ ॥

---

१. 'मुखान्' क-ख. २. 'वतीर्णे' ख. ३. 'प्रवरसैन्य' ख. ४. 'सुमतिभिः' ख.

स लब्धसंज्ञः प्रियपुत्रशोके भ्रातृक्षयस्योपरिमर्मलग्ने ।
सीताभिलाषं सहसा विहाय बबन्ध चित्ते मरणाभिलाषम् ॥ २४७ ॥

भ्रात्रा भुजेन सकलोद्यमदक्षिणेन
पुत्रेण सर्वगुणसंगमवल्लभेन ।
मानेन मौलिमणिना रहितस्य जन्तोः
किं जीवितेन शितशल्यशताचि(यि)तेन ॥ २४८ ॥

प्राप्तस्ततः समरभूमिमभग्नमानो
भृत्यानुजात्मजनिकृत्तशरीरपूर्णाम् ।
लङ्केश्वरः पृथुविषादभरश्रमेण
विश्रान्तये निजवपुःक्षयमाचकाङ्क्ष ॥ २४९ ॥

संनद्धे दशकंधरे युधि भयव्याघूर्णदिङ्मण्डले
पैशाचाश्वरथस्थिते हरिरथारूढे च रामे पुनः ।
बाणेषु प्रसरत्सु देहदलनव्यापारपाराप्तये
ह्येकस्य स्वतनुक्षये रिपुवधे चान्यस्य लोभोऽभवत् ॥ २५० ॥

अग्रे शरीरनिरपेक्षमरक्षिताङ्गं
रक्षःपतिं घनरणक्षयमीक्षमाणः ।
रामः क्षणं स्थगितनिश्चलचापपाणिः
साश्चर्यशौर्यभरविस्मयवान्प्रदध्यौ ॥ २५१ ॥

कायः कैलासमूलोद्धृतिविपुलशिलोल्लेखविख्यातसार-
स्तेजः शक्रेभकुम्भस्थिरशरशकलक्लेशनिःश्वासदीप्तम् ।
मानश्चाशेषलोकेश्वरमुकुटतटीलालिताज्ञाविलासः
सर्वं साश्चर्यमस्य त्रिभुवनजयिनः पापशापेन नष्टम् ॥ २५२ ॥

ध्यात्वेति निर्विवरमार्गणवर्षिणोऽस्य
दष्टौष्ठमाकुलितकुण्डलदीप्तगण्डम् ।
रामः शरेण दहनाचितदुर्निमित्त-
क्रूरार्धचन्द्रवदनेन शिरश्चकर्त ॥ २५३ ॥

---

१. 'तेन रण' ख. २. 'शताश्रितेन' ख. ३. 'लोकस्य' क-ग.

रोमाञ्चसंचरणपीनकपोलभित्ति
　यद्यत्पपात वदनं दशकंधरस्य ।
आजन्मनोऽन्यमुखतत्क्षणदर्शनेन
　प्रीत्येव विस्मयमयद्युति तत्तदासीत् ॥ २९४ ॥
दृष्ट्वा च्युतानि वदनानि नव क्रमेण
　कण्ठस्खलत्कनकपुङ्खशराचितानि ।
व्याप्तानि दीप्तहरहोमहुताशलेशैः
　संस्मारितानि दशमं दशकण्ठवक्त्रम् ॥ २९५ ॥
कृत्ते च मूर्ध्नि दशमे दशशेखरस्य
　प्रत्यक्षदृष्टवदनच्युतमन्युवह्निः ।
शान्तोऽपि कण्ठविगलद्घनशोणितौघै-
　रासीत्सशेष इव कुण्डलरत्नभाभिः ॥ २९६ ॥
हत्वाथ रामः समरे दशास्यं विभीषणं तद्विभवेऽभिषिच्य ।
लङ्काकलङ्केन परस्थलस्थां सीतामवाप्तामपि नाभ्यनन्दत् ॥ २९७ ॥
तीव्रे वियोगदहने तनुतां गतापि
　भर्त्रार्पिता विषमधाम्न्यनपायवह्नौ ।
कोपानले निपतिता विपुलेऽथ सीता
　शुद्ध्यै विवेश हिमसंहतिशीतमग्निम् ॥ २९८ ॥
पतिव्रतां तां स्वयमेव दोर्भ्यामादाय रामाय ददौ हुताशः ।
स लोकपालस्तुतशीलसत्त्वां तां प्राप्य लक्ष्मीं प्रययावयोध्याम् ॥ २९९ ॥
तत्र प्रणामैर्भरतेन हर्षबाष्पाभिषेकार्चितपादपद्मः ।
सुग्रीवलङ्कापतिसेव्यमानः स प्राप राज्यं त्रिदशाभिषिक्तः ॥ २६० ॥
काले प्रयाते प्रणिधिः प्रजानां वृत्तान्तवेदी विजने समेत्य ।
व्यजिज्ञपद्दूरतरप्रवासे लोकापवादं जनकात्मजायाः ॥ २६१ ॥
जायां स जानन्नपि शुद्धशीलां लोकापवादप्रसरासहिष्णुः ।
सौमित्रिमादिश्य सगर्भभारां तत्याज वाल्मीकितपोवने ताम् ॥ २६२ ॥

१. 'संतति' ख. २. 'भिषेकाञ्चित' क-ग.

नित्यार्द्रदुःखे जनजीवितेऽस्मिन्सुखान्यनित्यानि सयौवनानि।
धनानि विद्युद्द्युतिचञ्चलानि क्षणक्षयाणि प्रियसंगमानि ॥ २६३ ॥
बाल्ये भूमितलेऽर्पिता तदनु च क्लिष्टा वने भीषणे
पौलस्त्येन हृता भयक्षतधृतिर्ब(ती रु)द्धाथ लङ्कावने।
लब्धाशुद्ध्यनले च्युता पुनरपि त्यक्ता सती जानकी
संसारे सतताश्रुपातिनि नृणां धिङ्नित्यदुःखस्थितिम् ॥ २६४ ॥
आश्वास्यमाना जनकोपमेन वाल्मीकिना दीनदयान्वितेन।
कालं तनुत्यागमनोरथैः सा नित्याश्रुपातार्द्रकुचा निनाय ॥ २६५ ॥
सासूत भर्तृप्रतिबिम्बरूपौ पुत्रौ तनुत्यागविशेषविघ्नौ।
वाल्मीकिना क्षत्रियसंस्क्रियाभिः कुशो लवश्चेति कृताभिधानौ॥२६६॥
प्रवर्धमानौ मुनिना स्वकाव्यमध्यापितौ गीतिविभक्तवर्णम्।
पूर्वं भविष्यच्चरितं निबद्धं रामायणं कर्णरसायनं तौ ॥ २६७ ॥
निरास सीताविरहे द्वितीये शशीव रामस्तनुतामवाप्तः।
प्रदीप्तदुःखाग्निचितां विवेद श्मशानभूमिप्रतिमां विभूतिम् ॥ २६८ ॥
किं भोगरोगैः किमयत्नरत्नैः किं नन्दनैश्चन्दनचन्द्रसौधैः।
वियोगशल्यैर्हृदयेऽवसन्ने किं नित्यशोकेन कुजीवितेन ॥ २६९ ॥
कदाचिदास्थानसभासनस्थं रामं प्रहारक्षतमस्तकः श्वा।
व्यजिज्ञपद्देव यतिव्रतेन हतोऽस्मि विप्रेण विनापराधम् ॥ २७० ॥
भिक्षुर्विलक्षः क्षतकारणं तत्पृष्टोऽपि किंचिन्न यदाचचक्षे।
तद्दण्डमूकेषु सभास्थितेषु तदा पुनः प्राह स निश्चितं श्वा ॥ २७१ ॥
देव द्विजन्मा स्वमठेऽधिकारी पुराहमासं विगतस्पृहोऽपि।
केनाक्रमेणोपग(न)ता न जाने तथापि मे निन्द्यतमा श्वजातिः॥२७२॥
कालञ्जरे देवमठाधिकारी विधीयतामेष विवेकहीनः।
न यस्य कोपप्रशमेऽपि शक्तिर्लोभप्रहाणेऽपि स किं समर्थः ॥२७३॥
एकोदरा मोहमहीप्रजाता मदस्मरक्रोधविषादलोभाः।
एकानुमानेन भवन्ति जन्तोः सर्वे सदा स्थूललघुक्रमेण ॥ २७४ ॥

१. 'काव्य' ख.

श्रुत्वैतदुद्दामगजाधिरूढं भिक्षुं नृपः स्फीतमठाधिनाथम् ।
चक्रे चलच्चामरचारुचञ्चद्द्विकुञ्चितोष्णीषविलासहासम् ॥ २७५ ॥
धर्मस्य गोप्ता च्यवनेन रामः प्रीत्यार्थितः क्रूरतरासुरस्य ।
त्रैलोक्यशत्रोर्लवणाभिधस्य वधाय शत्रुघ्नमथादिदेश ॥ २७६ ॥
शूलायुधे तेन हतेऽथ दैत्ये तत्कानने काञ्चनतोरणाङ्का ।
दिव्येव शत्रुघ्ननिवेशिताभूत्पुरीप्रथार्हा मधुराभिधाना ॥ २७७ ॥
काले प्रयाते सुतमष्टवर्षं स्कन्धे समादाय मृतं द्विजन्मा ।
उच्चैः प्रचुक्रोश सभाङ्गनाग्रद्वारान्तिके वेत्रिभयानभिज्ञः ॥ २७८ ॥
अयं शिशुर्मे स्थविरस्य सूनुर्व्यसुत्वमाप्तस्तिलतोयदाता ।
नृपापचारेण भवत्यवश्यमकालमृत्युव्यसनं प्रजानाम् ॥ २७९ ॥

धर्मद्रोहिणि विद्रुतार्द्रकरुणे[1] क्षुद्रैः प्रजोपद्रवै-
धूर्तैर्भुक्तधने[2] प्रधानविमुखे विज्ञप्तिनिद्राजुषि ।
कायस्थैरजितैर्जिते क्षितिपतौ लब्धोदयैरिन्द्रियै-
र्दुर्भिक्षानलचौरवारिमकरैर्दीनो जनः पीड्यते ॥ २८० ॥
नाथे दिक्षु भगीरथे शुभकथे पुण्याप्ततीर्थप्रथे
कान्तस्वर्गपथे पृथौ दशरथे याते यशःशेषताम् ।
कष्टं नष्टधृतिः प्रकृष्टविपदामाधारभूताधुना
देवी मज्जति राजदुष्कृति[3]भरैर्भाराभिभूतेव भूः ॥ २८१ ॥

विप्रार्तनादेन विचार्यमाणकारुण्यदैन्यव्यसनेऽपि रामे ।
सभ्येषु मूकेषु मुनीश्वरेषु समभ्यधान्नारद एव वाग्मी ॥ २८२ ॥
शूद्रस्तपस्तीव्रतरं करोति शम्बूकनामा दिशि दक्षिणस्याम् ।
स एव वर्णाश्रमधर्मलोपः पुत्रक्षये कारणमग्र्यजातेः ॥ २८३ ॥
श्रुत्वोदितं[4] नारदवाक्यमेतस्मृतासमारुह्य विमानराजम् ।
अदक्षिणं धर्मपथस्य राजा गत्वावधीद्दक्षिणदिक्स्थितं तम् ॥ २८४ ॥
रामासिपट्टेन निकृत्तकण्ठे शूद्रे विमानेन दिवं प्रयाते ।
निजात्मजे तत्क्षणलब्धजीवे ममार्ज निन्दां स्तुतिभिर्द्विजातिः ॥ २८५ ॥

१. 'करणे' क-ग. २. 'धनैः' क-ग-घ. ३. 'दुष्कृत' ख. ४. 'श्रुत्वोचितं' ख.

हैमी कृता तस्य सुवर्णकारैरभिन्नरूपा रघुराजपत्नी ।
अभूत्परित्यागघनावमानमन्युव्रता मौनवतीव सीता ॥ २८६ ॥
वाल्मीकिशिष्यानुगतौ कुमारौ रामात्मजौ तत्र लवः कुशश्च ।
अगायतां श्रोत्रसुखं नृपाग्रे स्वरेण रामायणमादिकाव्यम् ॥ २८७ ॥
पुत्रौ परिज्ञाय मुनीन्द्रवाक्यात्तौ तुल्यरूपानुभवेन रामः ।
करोतु सीता पुनरेव शुद्धिमित्यर्थनां तत्र मुनेश्चकार ॥ २८८ ॥
वाल्मीकिशिष्यैरथ रामपत्नी तां प्रापिता यज्ञभुवं क्षणेन ।
लज्जावती राजसहस्रमध्ये मन्युप्रगल्भां गिरमुज्जहार ॥ २८९ ॥
यद्यार्यपुत्रान्न परः [1]प्रमृष्टश्चित्तेन वाचा मम कर्मणा वा ।
तत्सत्यसंकल्पगुणेन तेन ददातु माता वसुधावकाशम् ॥ २९० ॥
अथोत्थिता मूर्तिमती क्षितिस्तामङ्के समादाय तलं विवेश ।
काकुत्स्थहृद्भङ्गभियेव काञ्च्या सुताररावेण निवार्यमाणा ॥ २९१ ॥
रामस्ततः प्राप्तवधूनिराशः पातालसंहारविलाससज्जः ।
निवारितः पद्मभवेन साक्षात्स्नेहार्द्रतां पुत्रयुगे बबन्ध ॥ २९२ ॥
अथाश्वमेधे विधिभाजि पूर्णे कालेन साक्षाद्द्विजने समेत्य ।
संस्मारितो वैष्णवधाम रामः सहानुजैर्दिव्यपदं प्रपेदे ॥ २९३ ॥

अथ स भगवान्विष्णुः कृत्वा जगन्निरुपप्लवं
दशमुखभयं हृत्वा हर्षप्रदस्त्रिदशश्रियः ।
पवनतनयं धृत्वा धीरोन्नतं सविभीषणं
भुवनभवने कीर्तिस्तम्भं जगाम सुधाम्बुधिम् ॥ २९४ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते दशावतारचरिते श्रीरामावतारः सप्तमः ।

---

श्रीकृष्णावतारोऽष्टमः ।

अहो कालसमुद्रस्य न लक्ष्यन्तेऽतिसंतताः ।
मज्जन्तोऽन्तरनन्तस्य युगान्ताः पर्वता इव ॥ १ ॥

---

१. 'प्रसृष्टः' क-ग-घ.

युगदीर्घे प्रयातेऽथ काले दिनक्ष(ग)णक्रमैः ।
कैटभारिं पुनर्भूमिर्भारार्ता शरणं ययौ ॥ २ ॥
सा ददर्श सुधाम्भोधौ प्रबुद्धं शेषशायिनम् ।
विश्वरूपं फणारत्नसहस्रप्रतिबिम्बितम् ॥ ३ ॥
सुखप्रबोधपृच्छान्ते चतुर्मुखमुखैः सुरैः ।
मुनिभिर्नारदाद्यैश्च प्रणतैः परिवारितम् ॥ ४ ॥
पादसंवाहनव्यग्रां श्रियं प्रेमामृतह्रदे ।
वहन्तं हृदये व्यक्तं कौस्तुभप्रतिबिम्बिताम् ॥ ५ ॥
मही मरकतश्यामा व्यक्तमौक्तिकभूषणा ।
खलक्ष्मीर्लक्ष्यनक्षत्रमालेव प्रणनाम तम् ॥ ६ ॥
सा प्रणामचलत्कर्णोत्पलालिस्वनसंनिभाम् ।
विज्ञप्तिं ज्ञातवृत्तस्य चक्रे विश्वान्तरात्मनः ॥ ७ ॥
भगवन्भवतः सर्वलोकचिन्तार्तिहारिणः ।
वात्सल्यपेशलस्याग्रे पुनरुक्तं निवेद्यते ॥ ८ ॥
हिरण्याक्षबलात्क्षिप्ता निक्षिप्तक्षितिभृत्कुला ।
समुत्क्षिप्ताक्षयैवाहं वराहवपुषा स्वयम् ॥ ९ ॥
कालनेमिप्रभृतयः पुरा मद्भारशान्तये ।
ये हता भवता दैत्यास्तेऽवतीर्णाः पुनर्नृपाः ॥ १० ॥
उग्रसेनस्य तनयः क्रूरः क्रूरतरानुगः ।
वृष्णिवंशे समुत्पन्नः कालनेमिर्महासुरः ॥ ११ ॥
अनन्तदैत्यभूपालबलभारभरार्दिता ।
अधर्मबहुलं कालं न सहे वोढुमक्षमा ॥ १२ ॥
श्रुत्वैतदुक्तमुर्व्या भगवान्सस्मिताननः ।
करिष्याम्युचितं सर्वमित्युक्त्वा विससर्ज ताम् ॥ १३ ॥
पृथिव्यामथ यातायां विधा(ज्ञा)य हृदयस्थितम् ।
विष्णोः समीहितं सर्वं सुरान्प्राह पितामहः ॥ १४ ॥

---

१. 'अथोद्गता' ख. २. 'समन्तात्' ख.

भूमिभारावताराय देवोऽवतरति क्षितिम् ।
यदुवृष्णिकुले याति वसुदेवस्य पुत्रताम् ॥ १५ ॥
यूयमंशावतरणं कुले कुरुत[1] भारते ।
इत्युक्ते पद्मगर्भेण तथेत्युक्त्वा ययुः सुराः ॥ १६ ॥
ततः कदाचित्प्रययौ नारदो मथुरां पुरीम्[2] ।
स्वच्छन्दवादनिरतः[3] कलिकेलिकुतूहली ॥ १७ ॥
स रहः कंसमभ्येत्य प्राप्तपूजासनोऽवदत् ।
धर्ममार्गेण वर्तस्व रक्षेमां विद्रुतां श्रियम् ॥ १८ ॥
पितृष्वसुस्ते देवक्या यः समुत्पद्यते सुतः ।
स सुरैर्निश्चितोऽन्ताय विभूतेर्जीवितस्य ते ॥ १९ ॥
उक्त्वेति याते देवर्षौ कंसः पापी पितृष्वसुः ।
देवक्याः किंकरान्गर्भनिधनाय समादिशत् ॥ २० ॥
हतेषु षट्सु बालेषु वसुदेवसुतेष्वथ ।
सपत्न्यै सप्तमं गूढं रोहिण्यै देवकी ददौ ॥ २१ ॥
स विष्णोः शयनाभ्यासाद्भूभारभरणक्षमः ।
अवतीर्णः शिशुः[4] शेषः प्रीतिमन्तर्वहन्निव ॥ २२ ॥
अथाष्टमं सुतं जातं वसुदेवः स्वयं निशि ।
गोकुले नन्दगोपस्य निदधे वधशङ्कितः ॥ २३ ॥
नन्दपत्न्या यशोदायाः कन्यां विनिमयेन सः ।
आदाय गूढसंचारी निजजायान्तिके क्षिपत् ॥ २४ ॥
सा कन्या करुणाहीनैः प्रबुद्धैरथ किंकरैः ।
शिलायामाहता दीप्ता विद्युल्लेखेव खं ययौ ॥ २५ ॥
साष्टादशभुजा कान्ता प्रदीप्तविविधायुधा ।
कंसस्यायुः पिबन्तीव भेजे विन्ध्यवसुंधराम् ॥ २६ ॥
रोहिणीभवनाज्ज्येष्ठमपि गूढमतिः सुतम् ।
वसुदेवः क्षयभयान्नन्दगोपगृहेऽत्यजत् ॥ २७ ॥

---

१. 'कुर्वन्तु' क. २. 'मथुरां नारदः' ख. ३. 'विदितः' ख. ४. 'शिशुः' क.

तौ संकर्षणकृष्णाख्यौ यशोदा दधती ययौ ।
विश्रुता[1] दानसंभोगौ श्रीरिव स्पृहणीयताम् ॥ २८ ॥
संकर्षणः शशिसितः कृष्णो मरकतद्युतिः ।
बभतुः प्रथमोद्भेदौ गङ्गायमुनयोरिव ॥ २९ ॥
स्वदेहरक्षायत्नेन बालोद्दलनशालिना ।
कंसेनान्यत्कृतं मोहादन्यद्दैवेन[2] निर्मितम् ॥ ३० ॥
कलयति धिया स्वार्थं सर्वः सदाभ्युदयेच्छया
किमपि यतते तावद्यावत्फलं परिदृश्यते ।
तदनु च विधिः क्रीडोन्मत्तः करोति तदश्मना
जलभृतघटं भङ्क्त्वा दूरादिवाशु जलस्थितिम्[3] ॥ ३१ ॥
राज्यार्हौ गोकुले बालौ कंसः श्रुत्वा तयोः क्षये ।
चक्रे गूढोद्यमोपायान्गर्भव्यत्ययशङ्कितः ॥ ३२ ॥
स्तन्यतृप्तः शिशुः कृष्णः कदाचिन्निद्रयान्वितः ।
पादप्रहारेणाविद्धं बभञ्ज शकटं महत् ॥ ३३ ॥
विसृष्टामथ कंसेन पूतनां निशि राक्षसीम् ।
विषार्द्रस्तनदां कृष्णश्चक्रे निष्पीतजीविताम् ॥ ३४ ॥
किंचित्संचरणाभ्यासे पाणिमालम्ब्य यत्नवान् ।
दत्तद्वित्रिक्रमश्चक्रे हर्षं मातुस्त्रिविक्रमः ॥ ३५ ॥
ततः कुमारयोः पातभीत्या हरिणवेगयोः ।
अविश्रान्तानुसरणे यशोदा श्रममाययौ ॥ ३६ ॥
उद्विग्ना गतिविघ्नाय कृष्णस्य जननी व्यधात् ।
बलिबन्धनधीरस्य दाम्ना बन्धमुलूखले ॥ ३७ ॥
दामोदरस्ततो नाम्ना समाकर्षन्नुलूखलम् ।
मध्येन निर्ययौ वेगाद्यमलार्जुनवृक्षयोः ॥ ३८ ॥
संलग्नोलूखलाकर्षात्पेततुस्तौ महाद्रुमौ ।
यमुनाक्षोभसंभूतभयकम्पितगोकुलौ ॥ ३९ ॥

---

१. 'विनतादान' ख-ग. २. 'दैवविनिर्मितं' ख-ग. ३ 'जन' क-ग.

ततः कृष्णाश्रयेण श्रीगोकुले जितनन्दना ।
स्वभावरमणीयेऽपि रमणीयतराभवत् ॥ ४० ॥

स्निग्धश्यामास्तरुतृणभुवः संपतन्निर्झरौघा
मेघप्रेमोन्मुखशिखिमुखस्थायिनो मन्थघोषाः ।
गायद्गोपीस्तिमितहरिणीहारिणः काननान्ताः
कान्तश्चक्रुः प्रमदसमयं(मसमं) यामुनाः कूलकच्छाः ॥ ४१ ॥

ततः स्तोकपरिम्लाने शैशवे शिशिरोपमे ।
माधवस्याभवत्किंचिदुन्मुखी यौवनद्युतिः ॥ ४२ ॥

ततः कृष्णस्य गोपालडिम्भमण्डलवर्तिनः ।
बभूव कन्दुकोद्दामक्रीडासु निबिडो रसः ॥ ४३ ॥

पतिते यमुनाकूलसलिले केलिकन्दुके ।
ददर्श कालियस्योग्रं नागस्य भवनं हरिः ॥ ४४ ॥

व्याप्तं कल्पान्तरजनी कवलीकारविभ्रमैः ।
कृतान्तमहिषश्यामैर्निस्त्रिंशविमलैर्जलैः ॥ ४५ ॥

कालः कथं वसतीह(त्येष) भयस्यापि भयंकरः ।
स तैराकृष्यमाणोऽपि कृष्णस्तद्दर्शनोद्यतः ॥ ४६ ॥

कदम्बशाखामालम्ब्य भवनोपान्तवर्तिनीम् ।
पपात दुरितोत्पातः सावेगः क्षुभितेऽम्भसि ॥ ४७ ॥

भ्रमद्भ्रमभुजाभेन शौरिभोगेन भोगिनः ।
आलिङ्गितस्तमाधूय वेगेनाचक्रमे शिरः ॥ ४८ ॥

पादाक्रान्तफणस्य फूत्कृतिविषावेगोष्णनिःश्वासिनः
कोपक्लेशविशेषदन्तकषणप्रोद्भूतधूमैर्हरेः ।
कालभ्रूभ्रमभङ्गुरैर्वृतमभूत्पातालमूलोद्गतैः
कालैः कालियबान्धवैरिव जलं साहायकाभ्यागतैः ॥ ४९ ॥

पीडितः शरणं शौरिं स यातस्तद्गिरा ययौ ।
रौद्रः समुद्रं तत्पादमुद्रया तार्क्ष्यनिर्भयः ॥ ५० ॥

ततस्तालवने दैत्यं धेनुकं खररूपिणम् ।
जघान गोकुले विघ्नं हेलयैव हलायुधः ॥ ९१ ॥
अथ गोपालरूपेण प्रलम्बो नाम दानवः ।
कन्दुकक्रीडया प्रीतिं विदधे रामकृष्णयोः ॥ ९२ ॥
कदाचित्स्कन्धमारूढस्तेन वेगवता हृतः ।
रामस्तस्याकरोन्मुष्टिपातेन शतधा शिरः ॥ ९३ ॥
अथ गोवर्धनगिरौ शक्रयागमहोत्सवे ।
भक्ष्यभोज्यमहारम्भसंभारो गोकुलेऽभवत् ॥ ९४ ॥
पूज्यः पर्वत एवायमित्युक्त्वा शक्रपूजनम् ।
निवार्य कृष्णस्तद्भोज्यं बुभुजे दिव्यरूपभृत् ॥ ९५ ॥
ततः प्रम्लानमानेन मन्युना शतमन्युना ।
प्रेरिता घननिर्घोषघोरमेघाः समाययुः ॥ ९६ ॥
तैर्ग्रस्तवासरालोकैर्निगीर्णभुवनैर्घनैः ।
आहूतेव महारावैः कालरात्रिरदृश्यत ॥ ९७ ॥
विरावकृतहृद्धट्टमेघसंघट्टविप्लवे ।
खं क्षितौ जलरूपेण भयभग्नमिवापतत् ॥ ९८ ॥
ते शक्रक्रोधसंनद्धाः शक्रचापचिता घनाः ।
सद्यः पीतमिवाम्भोधिं वमन्तः क्ष्मामपूरयन् ॥ ९९ ॥
संरम्भेण घनाघनैर्घनतरैः संपीड्यमानैर्मिथः
प्रोद्भूतेऽथ पृथुव्यथारवनिभे संस्फूर्जिते गर्जिते ।
भीत्या क्वापि ययुः क्षितिच्युतनभः संभावनाकम्पिताः
कल्पान्तागमशङ्किता इव महानीहाररुद्धा दिशः ॥ १०० ॥
धारासाराशनिनिपतनक्लेशसंपीडितानां
सीदद्वत्सप्रणिहितदृशां शीतवातार्दितानाम् ।
वेगक्षोभागतगिरिनदीनाददीनाननानां
प्राणत्राणं क्वचिदपि गवां नाभवद्विह्वलानाम् ॥ १०१ ॥

अङ्गभङ्गं गवां दृष्ट्वा गोविन्दः करुणाकुलः[1] ।
त्राणाय गिरिमुद्धृत्य गोवर्धनमधारयत् ॥ ६२ ॥
छत्रीकृते गिरौ तस्मिन्दोर्दण्डधृतिनिश्चले ।
गोगणानां सगोपानां पुनर्जीवागमोऽभवत् ॥ ६३ ॥
उत्क्षिप्तेऽसुरवैरिणा क्षितिधरे क्षीरोदधिः क्षोभवा-
न्भेजे भीतिमकाण्डदण्डमथनक्षोभाभिशङ्की पुनः ।
विन्ध्यस्यासमयोद्गमं विगणयन्मन्ये श्वसन्कम्पवा-
न्हस्तन्यस्तसमस्तशापसलिलः क्षोभादगस्त्योऽभवत् ॥ ६४ ॥
अवहदहतधैर्ये दोष्णि कृष्णस्य भार-
श्रमशमनधियेव क्ष्माधरः सोपरोधः ।
अविरतनिपतद्भिर्निर्झराणां सहस्रैः
स्फटिकविकटजेम्भ[2](?)स्तम्भसंभारशोभाम् ॥ ६५ ॥
गोवर्धनस्य धरणे व्रजसुन्दरीणां
साहायकोच्चचरणोचितदोर्लतानाम् ।
अप्राप्तिलोलकरविभ्रममाकलय्य
कृष्णः स्मितांशुधवलाधरपल्लवोऽभूत् ॥ ६६ ॥
कृष्णेनाश्चर्यनिधिना गोगणे परिरक्षिते ।
लज्जयेव न्यवर्तन्त पवनोच्छ्वासिनो घनाः ॥ ६७ ॥
ततः शक्रः समभ्येत्य प्रसाद्य विजने हरिम् ।
कामधेनुगिरा तस्मै गोपालाधिपतां ददौ ॥ ६८ ॥
अथ प्रपेदे गोविन्दः प्रौढं मदमिव द्विपः ।
सहकारतरुः कान्तं वसन्तमिव यौवनम् ॥ ६९ ॥
तस्य सानन्दशृङ्गारे वयसि व्यक्ततां गते ।
बभूवाभिनवोत्साहः प्रतापाभरणेन स्मरः ॥ ७० ॥
तस्य निर्भरतारुण्यलावण्यं नयनामृतम् ।
पिबन्तीनामभूद्गोपकान्तानां मदविभ्रमः ॥ ७१ ॥

---

१. 'करुणालयः' क-ग. २. 'जम्ब' ग; 'जृम्भ' घ.

[१]व्यामूढस्खलितार्धविक्लवपदा वाणी गतिश्चास्फुटा
चित्तं भ्रूयुगलं च वीचिरचनासंवादि दो[२]लायितम् ।
निद्रा किं च दरिद्रतामुपगता लज्जा च सज्जा स्मरे
क्लैव्यं माधवयौवनद्युतिपदे गोपाङ्गनानामभूत् ॥ ७२ ॥

स्वैराचारस्मरपरिचये तत्र शौरेः प्रवृत्ते
वेषालापोद्धतगतितयान्योन्यसंभाव्यमाने ।
आसील्लज्जाविनयनिभृता व्यक्तसंसक्तमन्यु-
स्तासामन्तः कलुषकलनानल्पसंकल्पजल्पः ॥ ७३ ॥

कर्णाभ्यर्णविकीर्णलोचनरुचः सन्त्येव चन्द्रानना-
स्त्वत्तोऽन्या नवयौवनोन्नतिलसल्लावण्यगण्याः परम् ।
यासामेष हरिर्मनोरथशतैरर्थी क्षणालोकने
किं कृष्णेन विलोकिताहमिति ते रूढः प्रमूढे मदः ॥ ७४ ॥

अन्तर्लोचनयोर्विशत्यविरतं लग्नश्च पाणौ गतिं
निर्बन्धेन रुणद्धि धावति मुहुर्दंशाभिकामोऽधरे ।
सख्यः किं करवाणि वारणशतैर्नैवापयाति क्षणं
कृष्णः षट्चरणः प्रयाति चपलः पुष्पोच्चये विघ्नताम् ॥ ७५ ॥

कर्षत्यंशुकपल्लवं परिहृतः प्रत्याहृतिं नोज्झति
प्रक्षिप्तश्चरणे [३]लगत्यविरतं तिष्ठत्यदृश्यः पथि ।
अङ्गान्युल्लिखति प्रसह्य यदि वा लब्धावकाशः क्वचि-
त्किं शौरिर्घ[४]नकुञ्जवञ्जुललताजालान्तरे कण्टकः ॥ ७६ ॥

स्वच्छाम्बुप्रतिबिम्बवक्रतिलकोल्लेखादरालोकनं
यत्नेनोच्चितचूतपल्लवलवे कर्णावतंसस्पृहा ।
एतस्याः कुसुमेषु बन्धनधिया केशावकाशक्रिया
केनायं नवरागयोगगुरुणा वेषोपदेशः कृतः ॥ ७७ ॥

१. 'मूढप्रस्खलि' ख-ग. २. 'लीलायितम्' ख-ग. ३. 'गलति' क-ख. ४. 'वन' ग; 'नग' ख.

कोऽयं याति लघुक्रमैरहमहं कस्त्वं सखि श्यामला
श्वासायासवती क्व यासि तिमिरे तं नष्टमिष्टं मृगम्।
अन्वेष्टुं यमुनातटीमुपगता भीतासि भूतभ्रमा-
न्मूढे कृष्णभुजंग एष विटपे कौटिल्यलीनः स्थितः॥ ७८॥

संतप्तैव हता करोमि किमहं तां प्रेषयन्त्या मया
लब्धं मौग्ध्यफलं भुजंगनिकटं वक्रां द्विजिह्वां सखीम्।
धिग्दूतीं तरुणीं करोति किल या स्वीकृत्य दूरे प्रियं
हस्तोत्सृष्टखगः प्रयत्ननिचयैर्नायाति तृप्तोऽन्यतः॥ ७९॥

जानेऽन्यासहितं विलोक्य कुटिलं तं कूटकोषं त्वया
प्रत्यक्षागसि निह्नवासहनया कोपेन दष्टोऽधरः।
श्वासायासविसंस्थुला न च कुचोत्कम्पं विमुञ्चस्यहो
मोहाद्दुःसहविप्लवे चपलया किं प्रेषिता त्वं मया॥ ८०॥

न स सखि यमुनायास्तीरवानीरकुञ्जे
गहनभुवि भवत्या मत्प्रियः क्वापि दृष्टः।
सुमुखि फलमियत्तु स्नेहमोहात्त्वयाप्तं
कुचमुखलिखितेयं कण्टकोल्लेखरेखा॥ ८१॥

इत्यभून्मदनोद्दामयौवने कालियद्विषः।
गोपाङ्गनानां संरम्भगर्भोपालम्भविभ्रमः॥ ८२॥

प्रीत्यै बभूव कृष्णस्य श्यामानिचयचुम्बिनः।
जाती मधुकरस्येव राधैवाधिकवल्लभा॥ ८३॥

लावण्यं नवनीतसारममृतस्येवोद्वहन्त्यो नवं
तन्वाना द्युतिदिग्धदुग्धधवलां मुग्धस्मितांशुच्छटाम्।
माद्यद्यौवनकुम्भिकुम्भसुभगाभोगस्तनोत्तम्भिता
धैर्यं कस्य न दीर्घनेत्रवलनैर्मथ्नन्ति गोपाङ्गनाः॥ ८४॥

कदाचिदथ यातेऽस्तं गभस्तिमति शर्वरी।
आययौ गोपकान्तेव शनैः कृष्णाभिसारिणी॥ ८५॥

शशाङ्ककृतसंकेतसमागमविलोकिनी ।
क्षपा प्रतीक्षमाणेव तमःश्यामाम्बरा बभौ ॥ ८६ ॥
अथोद्ययौ सुधास्यन्दस्वेदार्द्रप्रसरत्करः ।
तुल्यालिङ्गनजामीर्ष्यां दिशन्निव दिशां शशी ॥ ८७ ॥
ततस्तारुण्यवानिन्दुर्मीलत्तरलतारकम् ।
मुखं चुचुम्ब [1]श्यामायाः कराकृष्टतमःपटः ॥ ८८ ॥
त्यक्त्वा पूर्वां स्पृशन्किंचिद्दक्षिणां च तथोत्तराम् ।
शिश्रिये पश्चिमामाशां सुधांशुर्बहुवल्लभः ॥ ८९ ॥
अत्रान्तरे समभ्यायादरिष्टो दुष्टचेष्टितैः[2] ।
जङ्गमः शृङ्गवानद्रिरिव दैत्यो वृषाकृतिः ॥ ९० ॥

किंचित्कुञ्चितकण्ठकायकषणक्लेशत्रुटत्पादप-
प्रोद्भूतोत्कटटांकृतैर्गललुठद्गम्भीरघोरस्वनैः ।
[3]सीत्कारश्वसितैः खुराग्रविषमोत्खातावकीर्णक्षिते-
स्तस्योद्गारभरेण भग्नमभवत्कम्पाकुलं गोकुलम् ॥ ९१ ॥

तद्भीतिच्युतगर्भासु गोषु गोपगणे गते ।
कृष्णं गोपाङ्गनाः कण्ठे जगृहुर्भयविह्वलाः ॥ ९२ ॥
शृङ्गप्रहाराभिमुखं दोष्णा कृष्णस्तमुद्धतम् ।
निपीड्य कण्ठे कुण्ठेच्छं चकार गतजीवितम् ॥ ९३ ॥
निष्पिष्टे शौरिणारिष्टे कंसामात्ये महौजसि ।
तत्कथा पप्रथे लोके पृथुविस्मयकारिणी ॥ ९४ ॥
ततः प्रभाते कंसस्य सुहृत्केशी महासुरः ।
आययौ हयरूपेण खुराघातक्षतक्षितिः ॥ ९५ ॥
करालो मांसलः शृङ्गी कृष्णतालुस्त्रिकर्णवान् ।
लक्षितः ककुदावर्तैर्जगत्संक्षयलक्षणैः ॥ ९६ ॥

---

१. 'यामिन्याः' ख. २. 'चेतनः' घ. ३. 'सीत्कारोच्छ्वसितैः' ख.

तस्य हेषितनिर्घोषैर्घोरैः खुररवेण च ।
त्रस्तगोगणमुद्विग्नगोपं वनमकम्पत ॥ ९७ ॥

शूत्कारश्वसितेन तर्जितमरुत्कोपात्तमृत्युस्थिति-
स्तेजोनिर्जितपावकः श्रमजलैर्विक्षिप्तपाथःपतिः ।
निश्चेष्टां वसुधां विधातुमुदितः कल्पान्तकालोपमः
सोऽभूदाकुललोकपालविभवावष्टम्भकृद्दुःसहः ॥ ९८ ॥

दन्ताभिघातसज्जस्य तस्यास्ये द्विगुणीकृतम् ।
उत्क्षिप्ताग्रखुरस्याशु न्यदधद्भुजमच्युतः ॥ ९९ ॥

तद्दन्तकषणेनापि निर्विघ्नघनविभ्रमः ।
कृष्णप्रसारितो बाहुः केशिवक्त्रं द्विधा व्यधात् ॥ १०० ॥

भग्ने निपतिते तस्मिन्कंसस्येव मनोरथे ।
अभूज्जम्भारिभवने तार्क्ष्यध्वजजयस्वनः ॥ १०१ ॥

अत्रान्तरे वृष्णिवृद्धैः सह स्वसचिवक्षयम् ।
चिन्तयन्मन्त्रभवने कंसः प्रोवाच निःश्वसन् ॥ १०२ ॥

इयं जनितलज्जेव मानम्लानिर्महीयसी ।
यन्मेरुतुल्यैर्युष्माभिः क्रियते तृणचिन्तनम् ॥ १०३ ॥

उद्धवः शनिरक्रूरः शतधन्वा विदूरथः ।
भोजाद्याश्च ममापूर्वं शृण्वन्त्वसमविग्रहम् ॥ १०४ ॥

पितुः स्वसुः पतिर्वृद्धः स्नेहसंमानवृत्तिभिः ।
वसुदेवः स चास्माभिः पूजितः परिपूरितः ॥ १०५ ॥

स्वसुतौ तेन विन्यस्तौ गोकुले गूढचारिणौ ।
शोकातङ्काङ्कुरौ यौ मे विषपादपतां गतौ ॥ १०६ ॥

ज्ञातिभ्यो भयमस्तीति सत्यमाह महामतिः ।
विभीषणमतोपायैर्हन्यमानो दशाननः ॥ १०७ ॥

---

१. 'मन्त्रि' क-घ. २. 'न कृतं' ख. ३. 'शङ्कातङ्काकुलौ' ख.

मर्मज्ञः स्वजनः पुंसां क्षये जागर्ति नापरः ।
शिक्षापक्षिभिराकृष्टाः क्षयं यान्त्येव पक्षिणः ॥ १०८ ॥
सदा दारूणि दह्यन्ते दारुजेन च वह्निना ।
क्रिमिणा स्वाङ्गजातेन पात्यन्ते प्रौढपादपाः ॥ १०९ ॥
मृज्जातलोहकुद्दालैः खन्यते मृण्मयी मही ।
स्वजातैर्निर्झरैर्नीताः कषद्भिर्भूधराः क्षयम् ॥ ११० ॥
ज्ञातिप्रहारो निःशर्ममर्मपाती पराधिकः ।
लोहाधिकां व्यथामस्थ्नः करोत्यस्थिमुखः शरः ॥ १११ ॥
सहभोग्यामपि ज्ञातेर्नेच्छन्ति ज्ञातयः श्रियम् ।
काङ्क्षन्ति भूतिमन्येषां दूरालोकननिष्फलाम् ॥ ११२ ॥
किं कृतं सुकृतं तावद्वसुदेवेन धीमता ।
बन्धुद्रोहविदग्धेन गोपालौ कुर्वता सुतौ ॥ ११३ ॥
उपेक्षितौ बन्धुधिया तत्सुतौ दयया मया ।
भुजच्छेदप्रवृत्तौ मे प्रयातौ चिन्तनीयताम् ॥ ११४ ॥
कृष्णेन निहतोऽरिष्टः स च केशी सुहृन्मम ।
तद्भ्रात्रा मुष्टिना पिष्टः प्रलम्बः स च धेनुकः ॥ ११५ ॥
अधुना कोपविवलद्भ्रूलतां नीतिमेतयोः ।
करोम्यहं यथा बालौ पुनर्नैवं करिष्यतः ॥ ११६ ॥
इति कंसेन सावज्ञमन्तर्गम्भीरमन्युना ।
उक्ते तमुद्धवः प्राह षाड्गुण्यविनयेद्धधीः ॥ ११७ ॥
राजन्न स्वजने कोपं कुपितः कर्तुमर्हसि ।
स्वीकार्याः सर्वथा क्रुद्धलुब्धभीतावमानिताः ॥ ११८ ॥
क्रुद्धान्प्रसादनैर्लुब्धान्धनैर्भीतांश्च सान्त्वनैः ।
माननैरवमानार्तान्नयेद्भिन्नानभिन्नताम् ॥ ११९ ॥
विभिन्नस्वीकारः शमयति नृपाणां रिपुभयं
निजैर्जीवोच्छित्तिर्भवति कुपितैर्धातुभिरिव ।

---

१. 'समन्युः' ख. २. 'एव' ख. ३. 'चर्म' घ.

न वैरं वैरेण प्रशममुपयाति क्वचिदपि
प्रदीप्तोऽग्निः शान्तिं व्रजति जलपुञ्जैर्न शिखिना ॥ १२० ॥

बान्धवौ पुत्रसदृशौ रामकृष्णौ न ते परौ ।
लक्ष्मीरक्षा क्षितीशानां राजपुत्राभिरक्षणम् ॥ १२१ ॥

समीपे सर्पाभः परमुपसरन्मेषहननः
खलग्रामे मूर्खः(मुख्यः) परपुरगतः शत्रुबलकृत् ।
हते तस्मिन्पापं किमपि कुलबीजाङ्कुरहति-
र्न दूरे नादूरे भवति सुखरक्ष्यः क्षितिपजः ॥ १२२ ॥

निरस्तः क्ष्माभुजा बन्धुः क्षीणवृत्तिर्विपद्गतः ।
तन्नामविक्रयोत्क्षेपैर्लक्षितो दिक्षु भिक्षते ॥ १२३ ॥

परमं श्रीमतामेतन्माननामविनाशनम् ।
यद्यात्यपूरितो बन्धुः परस्योत्तानपाणिताम् ॥ १२४ ॥

त्वद्बन्धुसुतयोर्नैव युक्ता गोपकुले स्थितिः ।
न यावद्विप्रकीर्णौ तौ तावत्स्वीकरणक्षमौ ॥ १२५ ॥

इत्युद्धवेनाभिहिते हिते सुविहिते श्रियः ।
अच्छिन्नदानव्रतवानक्रूरः कंसमभ्यधात् ॥ १२६ ॥

एकपात्रोचितां यस्य श्रियं नाश्नन्ति बान्धवाः ।
तस्यात्मपोषतोषस्य कोषक्लेशाय संपदः ॥ १२७ ॥

त्यागभोगभरोद्धृष्टा मानोन्मृष्टा महात्मनाम् ।
भान्ति भृत्यगृहोत्सृष्टा बन्धूच्छिष्टा विभूतयः ॥ १२८ ॥

भूतिमालोक्य विमुखा यस्य निःश्वस्य बान्धवाः ।
गच्छन्ति न विशेषोऽस्ति श्मशानस्य च तस्य च ॥ १२९ ॥

रत्नाकरसमृद्धश्रीर्बन्धुर्यस्य त्वमीदृशः ।
स कृष्णः कानने शष्पशय्यापरिचिताकृतिः ॥ १३० ॥

---

१. 'त्वद्बन्धु' क-ख-ग.

स्वकर्मभागिनः सर्वे निष्फलः स्वजनोऽर्थवान् ।
नातरङ्गस्य शङ्खस्य हृता सुषिरताब्धिना ॥ १३१ ॥

ज्ञातिर्निर्दीनः कृष्णस्तु दयया संविभज्यते ।
हेलोर्मिनिर्मितं मन्ये तेनैश्वर्यं दिवौकसाम् ॥ १३२ ॥

धेनुत्राणे शिखरिपतिना कृष्णदोष्णि स्थितेन
श्रान्ते शक्रे विफलजलदे लज्जिते शैलशत्रौ ।
लब्धाकाशप्रसभगतिना निर्झरोद्धातघोषै-
र्हर्षस्पर्शः प्रकटित इव स्फीतफेनाट्टहासः ॥ १३३ ॥

मददलनविधाने कालियस्याहिभर्तु-
र्दमनशमितशक्तेर्देहसंदेहभाजः ।
शरणगमनदैन्यम्लानमानस्य कृष्णः
शिरसि चरणमुद्रां तार्क्ष्यरक्षां चकार ॥ १३४ ॥

नाम्ना मानमहोन्नतिं प्रतनुते बध्नाति शोभां गुणैः
पुष्णात्याजिषु जिष्णुना शशिसितं भ्राजिष्णु दोष्णा यशः ।
हर्षं वर्षति निश्चलेन सहजप्रेम्णा च चित्तस्य यः
स श्लाघ्यः सुकृतेन बान्धवमणिर्भाग्योद्भवैर्लभ्यते ॥ १३५ ॥

अबन्ध्यसंगतिर्बन्धुः कृष्णतुल्योऽस्ति कस्तव ।
येन शक्रोऽपि गोपानां गौरवावनतः कृतः ॥ १३६ ॥

उक्तं निःशल्यकल्याणमस्माभिर्यदि मन्यसे ।
त्वद्गिराहं गच्छामि कृष्णाह्वानकृतार्थताम् ॥ १३७ ॥

विपुलः प्रस्थितश्चायं धनुर्यागमहोत्सवः ।
करोम्यहं तमुद्दिश्य केशवस्य निमन्त्रणम् ॥ १३८ ॥

इत्यक्रूरवचः श्रुत्वा कंसः कुटिलचेष्टितः ।
व्रजेति निःश्वसन्नुष्णमभ्यभात्तमधोमुखः ॥ १३९ ॥

१. 'तद्गिरा तव' ख.

अथ सज्जरथे गन्तुमक्रूरे व्रजमुद्यते ।
अभूच्चन्द्रोदयोद्भूत इव वृष्णिकुलाम्बुधिः ॥ १४० ॥
अतिक्रम्याथ मथुरामक्रूरः प्रथितो रथी ।
अवापाग्रसरत्सैन्यः पर्यन्तग्राममेखलाम् ॥ १४१ ॥
प्रत्यग्रपाकविनमत्कलमक्षेत्रपङ्क्तिभिः ।
हरितालरजःपुञ्जरञ्जिताभिरिवाचिताम् ॥ १४२ ॥
कदलीश्यामलारामवटवाटलतावृताम् ।
लम्बमानघनालाबुतुम्बकूष्माण्डमण्डलाम् ॥ १४३ ॥
वलत्कुटिलकल्लोलकुल्याकलकलाकुलाम् ।
द्राक्षाखुशीतलतलस्थलीशय्याश्रयाध्वगाम् ॥ १४४ ॥
अध्वन्यजग्धपूर्वेक्षुशल्कशुक्लीकृतस्थलाम् ।
पाकपिङ्गलनारङ्गीवनैः संध्यान्वितामिव ॥ १४५ ॥
ययौ स पश्यन्निःशङ्कशुकाशननिवारणे ।
उदञ्चद्भुजलक्ष्योच्चकुचाग्राः शालिपालिकाः ॥ १४६ ॥
स व्रजन्गोकुलोपान्तवनमालां व्यलोकयत् ।
उत्सरन्निर्झरासारस्निग्धश्यामलशाद्वलाम् ॥ १४७ ॥
गोरक्षादक्षशबरैः कृतक्षुद्रर्क्षसंक्षयाम् ।
घोरव्याघ्रपथावद्धयन्त्रकूटघटावटाम् ॥ १४८ ॥
तालीतालतमालसालकदलीपथ्यामलीश्यामलं
खर्जूरार्जुनसर्जबिल्वबकुलप्लक्षाक्षलक्षाकुलम् ।
पर्यन्ते स ददर्श हर्षजननं स्फीतोपदेशं गवां
निःश्वभ्रस्थलपुष्पशष्पशबलं निःसङ्कुलं गोकुलम् ॥ १४९ ॥
अच्छिन्नोदितमन्थमन्थररवं निर्घोषमेघभ्रम-
भ्राम्यन्मत्तमयूरनृत्तरुचिरं गोपाङ्गनागीतिभिः ।

---

१. 'पथि तां' ख. २. 'द्रोणी' क. ३. 'सर्वेक्षु' क. ४. 'घटापटाम्' ग. ५. 'निःसङ्गलो' ख-ग.

निःस्यन्दस्थितमुक्तशष्पकवलक्लीबाङ्गसारङ्गकं[1]
प्रीतिं प्राप स वीक्ष्य यामुनवलद्वीचिव्रजं गोकुलम् ॥ १९० ॥

ततस्तत्सैनिकैः कृष्णः प्रथमाप्तैर्निवेदितम् ।
पितुः पितृव्यमक्रूरं शुश्रावाभ्यर्च्यमागतम् ॥ १९१ ॥

घृतकुम्भदधिस्थालीसहस्रोपायनैः पुरः ।
प्रणम्यमानं गोपाग्र्यैर्ददर्शाक्रूरमच्युतः ॥ १९२ ॥

रथाग्रादवरुह्याथ लोलकुण्डलकङ्कणः(णम्) ।
दृष्ट्वा दामोदरं दूरादक्रूरः समचिन्तयत् ॥ १९३ ॥

अयं स भगवान्विष्णुरवतीर्णः सनातनः ।
भुवो भारावताराय मां जगादेति नारदः ॥ १९४ ॥

एष पद्मपलाशाक्षः श्रीमान्मरकतद्युतिः ।
स्निग्धलावण्यपीयूषैर्लिम्पतीव मनो मम ॥ १९५ ॥

वृष्णियादववंशस्य कियती स्पृहणीयता ।
अवतीर्णः स्वयं यस्मिन्भगवानेष केशवः ॥ १९६ ॥

इति ध्यायन्प्रहर्षाश्रुसंरुद्धनयनः स्खलन् ।
अकुण्ठोत्कण्ठया शौरेरक्रूरोऽन्तिकमाययौ ॥ १९७ ॥

पपात पादयोस्तस्य साग्रजः प्रणतोऽच्युतः ।
गाढालिङ्गनसंगत्या हृदयं प्रविशन्निव ॥ १९८ ॥

प्राप्तपूजासनः कृष्णं सोऽवदत्तन्मुखे दिशन् ।
प्रमोदविस्मयस्नेहबहुमानमयीं दृशम् ॥ १९९ ॥

कृष्ण त्वद्दर्शनानन्दसुधासंपूरिते हृदि ।
त्वत्संभाषणहर्षस्य क्वावकाशो विधीयताम् ॥ १६० ॥

वसुदेवस्य पुण्यानां पूर्णता किं दरिद्रता ।
यस्त्वां तनयमासाद्य स्वदृशाद्यापि नेक्षते ॥ १६१ ॥

---

१. 'क्लैवाङ्ग' क-ग-घ.

भवतस्त्रिजगज्जन्मस्थितिसंहृति[1]कारिणः ।
गूढजन्मकथा केन कथ्यते सर्ववेदिनः ॥ १६२ ॥
सततं सहते तीव्रां त्वत्कृते कंसवाच्यताम् ।
वसुदेवश्चलत्येषा नूनं न भवितव्यता ॥ १६३ ॥
जगद्धरणधीरेयं धन्या[2] देवी वसुंधरा ।
भारावतारसंनद्धश्चित्ते वहसि यां सदा ॥ १६४ ॥
विस्मृता देवकी किं ते त्वन्नाम्नापि स्नुतस्तनी ।
त्वां विना या सुतं रामं कौशल्येवावसीदति ॥ १६५ ॥
धनुर्यागे विसृष्टोऽहं कंसेन त्वन्निमन्त्रणे ।
त्वदागमनमानेन धन्या नन्दन्तु यादवाः ॥ १६६ ॥
तत्सर्वं करमादाय प्रातः कंसस्य शासनात् ।
आयान्तु नन्दगोपाद्याः सर्वे समयवर्तिनः ॥ १६७ ॥
इत्यक्रूरवचः श्रुत्वा तमाभाषत केशवः ।
प्रातरेवाहमागन्ता त्वदाज्ञा केन लङ्घ्यते ॥ १६८ ॥
ततः प्रभाते संनद्धं रथमारुह्य सानुगाः ।
मथुरां ययुरक्रूरसंकर्षणजनार्दनाः ॥ १६९ ॥
कथं राधामनामन्त्र्यागतोऽहमिति माधवः ।
अरतिं म्लानतां चिन्तां व्रजन्भेजे विनिःश्वसन् ॥ १७० ॥
गच्छन्गोकुल[3]गूढकुञ्जगहनान्यालोकयन्केशवः
सोत्कण्ठं वलिताननो वनभुवा सख्येव रुद्धाञ्चलः ।
राधाया न न नेति नीविहरणे वैक्लव्यलक्ष्याक्षराः
सस्मार स्मरसाध्वसाद्भुततनो रावोक्ति(?)रिक्ता गिरः ॥१७१॥
गोविन्दस्य गतस्य कंसनगरीं व्याप्ता[4] वियोगाग्निना
स्निग्धश्यामलकूललीनहरिणे गोदावरीगह्वरे (?) ।

---

१. 'संहार' ख. २. 'मन्ये' क-ख. ३. 'कुञ्जगूढ' ख. ४ 'हरिणी' ग-घ.

रोमन्थस्थितगोगणैः परिचयादुत्कर्णमाकर्णितं
गुप्तं गोकुलपल्लवे गुणगणं गोप्यः सरागा जगुः ॥ १७२ ॥

ललितविलासकलासुखखेलनललनालोभनशोभनयौवनमानितनवमदने
अलिकुलकोकिलकुवलयकज्जलकालकलिन्दसुताविवलज्जलकालियकुलदमने ।
केशिकिशोरमहासुरमारणदारुणगोकुलदुरितविदारणगोवर्धनधरणे
कस्य न नयनयुगं रतिसज्जे मज्जति मनसिजतरलतरङ्गे वररमणीरमणे १७३

उद्गीयमाने गुणसागरस्य गुणे गुणे रागरसेन शौरेः ।
गोपाङ्गना गूढरसानुरागा मुहुर्मुहुर्मोहहता बभूवुः ॥ १७४ ॥

गोविन्दे गुरुसंनिधौ परवशावेशादनुक्त्वा गते
सुप्तानां बकुलस्य शीतलतले स्वैरं कुरङ्गीदृशाम् ।
स्वप्नालिङ्गनसंगतेऽङ्गलतिकाविक्षेपलक्ष्या मुहु-
र्मुग्धा वञ्चक मुञ्च मुञ्च कितवेत्युच्चैरुरुच्चैर्गिरः ॥ १७५ ॥

राधा माधवविप्रयोगविगलज्जीवोपमानैर्मुहु-
र्बाष्पैः पीनपयोधराग्रगलितैः फुल्लत्कदम्बाकुला ।
अच्छिन्नश्वसनेन वेगगतिना व्याकीर्यमाणैः पुरः
सर्वाशाप्रतिबद्धमोहमलिना प्रावृण्नवेवाभवत् ॥ १७६ ॥

ज्ञात्वा कंसः समायान्तौ कुमारौ रामकेशवौ ।
चाणूरमुष्टिकौ मल्लौ विदधे तद्वधोद्यतौ ॥ १७७ ॥

अथ राजपथं प्राप्तौ बलात्संकर्षणाच्युतौ ।
राजार्हं चक्रतुश्चारुमाल्याम्बरविलेपनम् ॥ १७८ ॥

तौ विचित्राम्बरधरौ स्रग्विणौ चन्दनाचितौ ।
जनतानन्दजननौ राजद्वारमवापतुः ॥ १७९ ॥

हर्म्यस्था देवकी दृष्ट्वा कृष्णं कमललोचनम् ।
बाष्पसंरुद्धनयना मुमोह प्रस्तुतस्तनी ॥ १८० ॥

अथ राजाज्ञयोत्सृष्टं महामात्राङ्कुशेरितम् ।
गजं कुवलयापीडं ददर्शायान्तमच्युतः ॥ १८१ ॥

क्रोधान्धं मददोषदुःसहतरं भूभारभूताकृतिं
कुर्वाणं करदण्डकृष्टजनताजीवापहारं मुहुः ।
मातङ्गं कुनृपोपमं मुररिपुर्दृष्ट्वा प्रहारोद्यतं
हस्तोत्पाटितया जघान निजया निर्दारितं दंष्ट्रया ॥ १८२ ॥

अथ राजाज्ञया मल्लनागौ चाणूरमुष्टिकौ ।
कुमारयोरभिमुखौ चक्रतुर्जनसंक्षयम् ॥ १८३ ॥

जानुबन्धभुजाकर्षतलाघातघने रणे ।
कृष्णश्चाणूरमवधीन्मुष्टिकं च हलायुधः ॥ १८४ ॥

भुजयोरिव कंसस्य मल्लयोश्च्युतयोस्तयोः ।
भ्रूभङ्गभीषणस्योच्चैरुच्चचारोत्कटं वचः ॥ १८५ ॥

वध्यतां वसुदेवोऽयं क्रियतां तत्सुतक्षयः ।
विधीयतां च गोपानामुचितं राजशासनम् ॥ १८६ ॥

कंसस्येति ब्रुवाणस्य मदोद्दामस्य गर्जतः ।
दुष्टद्विपस्येव हरिर्वेगेनान्तिकमाद्रवत् ॥ १८७ ॥

संत्रस्ते वेत्रिसंघे नवभयसमयोद्भ्रान्तसामन्तचक्रे
हस्तस्रस्ते तरुण्याः शशिकरधवले चामरे विह्वलायाः ।
कृष्णः कंसं चकर्ष प्रविलुलितसितोष्णीषविश्लेषकेशैः
क्रोधाग्नेर्धूममालामिव कुसुमचलद्भृङ्गमालां दधानम् ॥ १८८ ॥

आकृष्टस्य सुरारिणारुणमणिव्याकीर्णदीर्घद्युति-
मौलिर्वक्षसि मौक्तिकांशुशबलः कंसासुरस्य च्युतः ।
व्यक्तोऽभून्नरसिंहशुभ्रनखरव्यापारमिश्रः क्षणं
दीर्णस्येव पुनर्हिरण्यकशिपोः स्फीतः स्रुतासृग्भरः ॥ १८९ ॥

हत्वा दूरतराकृष्टं मदान्धं कंसकुञ्जरम् ।
उग्रसेनं प्रविदधे राज्ये तज्जनकं हरिः ॥ १९० ॥

---

१. 'मौष्टिकं' क-ख. २. 'पुरो' क-ख. ३. 'च विदधे' क-ख.

पादयोर्वसुदेवस्य देवक्याश्चाच्युतः पतन् ।
बभूवानन्दनिस्पन्दनिबिडालिङ्गनातिथिः ॥ १९१ ॥
आविर्भूताः स्वयं विद्याः कलाश्च सकलास्ततः ।
निनाय स्पृहणीयत्वमवधानेन माधवः ॥ १९२ ॥
दक्षिणापथनाथस्य भीष्मकस्यात्मजां हरिः ।
जहार रुक्मिणीं कन्यां लक्ष्मीं जन्मान्तरागताम् ॥ १९३ ॥
रुक्मिण्यामथ कृष्णस्य प्रद्युम्नः प्रथमः सुतः ।
जाम्बवत्यामभूत्साम्बः प्रतिबिम्बनिभो पितुः ॥ १९४ ॥
सुन्दरीणां सहस्राणि षोडशान्तःपुरे हरेः ।
बभूवुस्तासु पुत्राणां लक्षसंख्योऽभवद्गणः ॥ १९५ ॥
नाडायनीं चन्द्रसेनां प्रद्युम्नः प्राप वल्लभाम् ।
यस्यामजीजनत्पुत्रमनिरुद्धं मनोभवम् ॥ १९६ ॥
ततः शक्रगिरारुह्य गरुडं गरुडध्वजः ।
गगने दैत्यचक्राणां चक्रे चक्रायुधः क्षयम् ॥ १९७ ॥
मुरसुन्दहयग्रीवनरकाद्या महासुराः ।
प्रययुश्चक्रिचक्राग्नौ क्षिप्रासङ्गपतङ्गताम् ॥ १९८ ॥
जरासंधेन संरुद्धां मागधेन प्रमाथिना ।
मथुरामथ संतज्य सानुगः प्रययौ हरिः ॥ १९९ ॥
द्वारकामथ कंसारिः पश्चिमाब्धितटे व्यधात् ।
जितलङ्कालकानाकनागेन्द्रनगरीं पुरीम् ॥ २०० ॥
बलात्क्षीरोदजन्मानं पारिजातं जनार्दनः ।
हृत्वा शक्रपुरोद्यानाद्द्वारकायां न्यवेशयत् ॥ २०१ ॥
अत्रान्तरे कंससुहृत्करालः कालविग्रहः ।
प्रतिज्ञां कालयवनश्चक्रे वृष्णिकुलक्षये ॥ २०२ ॥
कृष्णस्तं दुर्जयं मत्वा निःसहायो भुजायुधः ।
बुद्धियुद्धे धियं धृत्वा ययौ यवनमण्डलम् ॥ २०३ ॥

हेमरत्नमयं तस्य प्रविश्य भवनं हरिः ।
भयप्रदं यमस्यापि ददर्श यवनेश्वरम् ॥ २०४ ॥
सोऽपि कृष्णं विलोक्यैव पतितं भुजगोचरे ।
मनोरथशतावाप्तं जिघृक्षुस्तं समाद्रवत् ॥ २०५ ॥
तस्मिन्नभिद्रुते रौद्रे जवेन प्रययौ हरिः ।
न च पश्चाच्चचालास्य यवनः पूर्वकर्मवत् ॥ २०६ ॥
चतुःसमुद्ररशनां विगाह्यापि महीं हरिः ।
दृष्ट्वा तमचलं पश्चाद्विवेश हिमवद्गुहाम् ॥ २०७ ॥
तत्रेन्द्रार्थे हताशेषदैत्यस्य युगविस्तरः ।
यातः कालः प्रसुप्तस्य मुचकुन्दस्य भूपतेः ॥ २०८ ॥
अर्धनिद्रादरिद्रं मां शयानं यः करिष्यति ।
स भस्मसाद्यास्यतीति राजर्षिः समयं व्यधात् ॥ २०९ ॥
तस्य शय्याङ्कपर्यङ्कवक्रपादतलान्तरे ।
तस्थावलक्षितः शौरिः शङ्कासंकोचिताकृतिः ॥ २१० ॥
प्रविश्य कालयवनः शयानं वीक्ष्य भूपतिम् ।
कृष्णमायेति निश्चित्य निर्निद्रमकरोत्पदा ॥ २११ ॥
प्रबुद्धः कालयवनं पादस्पृष्टवपुर्नृपः ।
दृशा ददाह निःशेषं निद्राशेषकषायया ॥ २१२ ॥
निर्दग्धे कालयवने पर्यङ्कचरणाञ्चले ।
कायसंकलनालीनं दृष्ट्वा कृष्णमभाषत ॥ २१३ ॥
कस्त्वं परिमिताकारः कान्ताकर्णोत्पलद्युतिः ।
बिभर्षि गुणगम्भीरमहो माहात्म्यमुन्नतम् ॥ २१४ ॥
इयतीं ह्रस्वतां याता सृष्टिः कालनिमीलिता ।
मद्गुल्फपरिमाणं यद्वपुः स्वल्पतरं तव ॥ २१५ ॥
इत्युक्तो मुचकुन्देन प्रश्रयप्रणयी हरिः ।
स्ववृत्तं लोकवृत्तं च सर्वं तस्मै न्यवेदयत् ॥ २१६ ॥

१. 'उत्तमम्' क.

कालं विशालं विज्ञाय क्ष्मापालः क्षणवद्गतम् ।
दीर्घशय्यामिवोत्सृज्य भोगाशां समचिन्तयत् ॥ २१७ ॥
अहो कालगलत्सर्वभावभोगाभिमानभूः ।
स्वप्नप्रकारः संसारः पर्यन्तासत्यविभ्रमः ॥ २१८ ॥
भूमिः संकुचिता ग्रीष्मातपन्यस्तार्द्रचर्मवत् ।
वैराग्यं जनयत्येव जराजीर्णेव कामिनी ॥ २१९ ॥
तानि मित्राण्यतीतानि ते भृत्यास्ते च बान्धवाः ।
नरेषु रमते नात्मा यूथभ्रष्ट इव द्विपः ॥ २२० ॥
यस्मिन्नित्यम[1]मधूपमं तदखिलं कालेन लीढं सुखं
यातं हन्त पुरातनं विरसतां क्षुण्णेक्षुशल्कोपमम् ।
आमाम्रप्रतिमस्य नास्त्यभिनवस्यास्वादने स्वादुता
नेदानीं मम कृत्यमस्ति महता राज्येन भोगेन वा ॥ २२१ ॥
[2]मलिनाक्षमतां(?) भूतिः सा भूतिः शोभतेऽधुना ।
मुक्तिकान्ताधवलतां करोत्युद्धूलनेन या ॥ २२२ ॥
इति संचित्य राजर्षिः कैलासं तपसे ययौ ।
गत्वा कृष्णश्च वृष्णिभ्यः स्ववृत्तान्तं न्यवेदयत् ॥ २२३ ॥
बलेर्बाणासुरः सूनुरासीद्बाहुसहस्रवान् ।
यस्यास्थानसभासभ्यो भगवानभवद्भवः ॥ २२४ ॥
दीप्तरत्नगृहालोकैः सृजन्संध्यामिवानिशम् ।
बभूवाकाशगं यस्य नगरं शोणिताभिधम् ॥ २२५ ॥
उषा नामाभवत्तस्य कन्या लावण्यवाहिनी ।
आललम्बे स्तनतटीं यस्यां मज्जन्निव स्मरः ॥ २२६ ॥
युद्धं विना मे मिथ्यैव भाराय भुजकाननम् ।
इति तेनार्थितः शर्वः प्राप्स्यसीति तमभ्यधात् ॥ २२७ ॥

१. 'मनूपमं' ख-ग. २. 'मलिनं क्षमता' घ.

हरं कदाचिदुद्याने देव्या सह विहारिणम् ।
दृष्ट्वोषा स्वविवाहाय स्पृहां चक्रे घनस्तनी ॥ २२८ ॥
यः करिष्यति ते स्वप्ने कन्याभावव्यतिक्रमम् ।
भविष्यति स ते भर्ता तामुवाचेति पार्वती ॥ २२९ ॥
अथाययौ यौवनकृद्वल्लीनां कुसुमाकरः ।
कुर्वाणः सरसां प्रीतिलतां जनमनोवने ॥ २३० ॥
चञ्चच्चूतरजःपुञ्जपीताम्बरमनोहरः ।
अतसीकुसुमश्यामः शुशुभे नवमाधवः ॥ २३१ ॥
नम्राननना नवोद्भूतरजसा स्तबकस्तनी ।
मालती यौवनवती कन्येवोच्छ्वासिनी बभौ ॥ २३२ ॥
ववुर्मलयनिःश्वासा इव चन्दनचुम्बिनः ।
पवनाः पन्नगीदंशशङ्कयेव शनैः शनैः ॥ २३३ ॥
कूजत्कोकिलकण्ठवंशविरुतैः स्फायिन्यवाप्ते परं
चूतामोदमदाकुलालिपटलीवीणास्वनस्वादुताम् ।
शिक्षाचक्षणदक्षदक्षिणमरुद्दत्तोपदेशक्रमै-
र्मञ्जर्यो ननृतुर्मधूत्सवलसत्पुष्पायुधाराधने ॥ २३४ ॥
हेमहर्म्यप्रसुप्ताथ नीता स्वप्ने मनोमुषा ।
उषा केनापि कान्तेन शीलांशुकदरिद्रताम् ॥ २३५ ॥
तस्या धीधृतिचौरेण विज्ञाय हृदयं हृतम् ।
हेलाहरणभीत्येव हारस्तरलतां ययौ ॥ २३६ ॥
लज्जामज्जनविह्वलानननेत्यल्पप्रलापोद्धति-
र्नीवीमुक्तिनिरोधनिर्धुतिविधौ पाणिः क्वणत्कङ्कणः ।
शीतेनेव विकूजिता जवजुषः श्वासस्य शीत्कारिता
तस्या भ्रंशभयोच्चलत्कलकला काञ्ची सकम्पाभवत् ॥ २३७ ॥

---

१. 'घटस्तनी' ख. २. 'दक्षिण' ख-ग. ३. 'धीवृत्ति' क. ४. 'शूत्कारिता' ग.

प्रबुद्धा वृत्तकर्तव्या सा मुग्धा स्वप्नसत्यताम् ।
मन्यमाना मुहुर्मोहं कुललज्जाकुला ययौ ॥ २३८ ॥
शयनं विप्लवस्थानं भयेनेव विहाय सा ।
हर्म्यस्था प्रददौ प्रातर्दिक्षु चक्षुर्विलज्जिता ॥ २३९ ॥
सा सोत्कम्पकुचन्यस्तहस्तानभ्यस्तमन्मथा ।
मुमूर्च्छाच्छादयन्तीव प्रविष्टं हृदये प्रियम् ॥ २४० ॥
सा निशश्वास बाष्पाम्बुबिन्दुभिर्मौक्तिकैरिव ।
छिन्नस्य शीलहारस्य कुर्वाणा ग्रथनं पुनः ॥ २४१ ॥
प्रदध्यौ नवविध्वंससाध्वसायासिता चिरम् ।
क्षितौ सा चिन्तयानेव च्युतं चित्तमधोमुखी ॥ २४२ ॥
किं कस्य कथयाम्येतत्कं पृच्छामि करोमि किम् ।
का गतिः केन दृष्टाहं कुतस्तत्संगमः पुनः ॥ २४३ ॥
इति संदेहनिःस्पन्दां चिन्ताविक्रीतचेतनाम् ।
विलोक्य चित्रलेखाख्या सखी प्राणसमावदत् ॥ २४४ ॥
तन्वि कः खेदभारोऽयं भीरु किं भयकारणम् ।
पुत्री त्रैलोक्यभर्तुस्त्वं वध्यः कस्तेऽपराध्यति ॥ २४५ ॥
किं शय्यावलनाविमर्दगलितैः कर्णोत्पलस्य च्छदै-
र्लीनैः कामकृपाणलेशसदृशैर्व्याप्ता तवेयं तनुः ।
भ्रश्यन्मौक्तिकयोर्बिभर्षि कुचयोर्भिन्नेभकुम्भभ्रमं
स्पष्टोऽयं रतिसंगमव्यतिकरः कैस्येति मे संशयः ॥ २४६ ॥
इत्युक्ते सस्मितं सख्या सनिःश्वासाश्रुवर्षिणी ।
उषा शनैरवोचत्तां लिखन्ती क्ष्मामधोमुखी ॥ २४७ ॥
दृष्टः स्वप्ने मया कोऽपि रमणस्तनुकम्पनः ।
पीयूषवर्षी संस्पर्शे स्मरणे मरणोपमः ॥ २४८ ॥
जाने कम्पतरङ्गिताङ्गलतिका स्वप्नेऽहमालिङ्गिता
संस्पर्शे कुचयोर्निरर्गलतया हारोऽपि पार्श्वे कृतः ।

१. 'न लज्जिता' क-ख-घ. २. 'कन्येति' ख.

एतावत्तु सखि स्मरामि यदतो वृत्तं परं तत्परं
धैर्यस्योद्दलनं शरीरशमनं ध्यात्वापि नो वेद्मि किम् ॥२४९॥
मूर्छाच्छादितमीक्षते न नयनं तापे तनुः पच्यते
कम्पः सूचयतीव जीवगमनं मोहे मनो मज्जति ।
प्राग्जन्मार्जितकर्मणा बलवता कामेन कालेन वा
नो जानामि स केन मे धृतिहरः कण्ठे भुजंगोऽर्पितः ॥२५०॥
त्यज्यते सहजा लज्जा सह्यते गुरुवाच्यता ।
गण्यते न घना कीर्तिर्यत्कृते सोऽपि दुर्लभः ॥ २५१ ॥
इयं शीलविलुप्तिर्मे मानम्लानिर्महीयसी ।
दुर्लभे वल्लभे प्रीतिस्तनुत्यागेन शाम्यति ॥ २५२ ॥
इति ब्रुवाणां तामश्रुकणाकीर्णकुचस्थलीम् ।
संतापपिशुनोच्छ्वासां चित्रलेखावदत्सखीम् ॥ २५३ ॥
किं न स्मरसि मुग्धे त्वमहो विरहकातरा ।
देव्यादिष्टः स ते स्वप्नदृष्ट एव वरो वरः ॥ २५४ ॥
समाश्वसिहि हे तन्वि तनुस्तापक्षमा न ते ।
करोमि योगशक्त्याहमुपायं त्वत्समीहिते ॥ २५५ ॥
उल्लिख्य निखिलं चित्रपटे त्रिभुवनं तव ।
सदृशं दर्शयाम्येव तत्रालोकय वल्लभम् ॥ २५६ ॥
इत्युक्त्वा चित्रलेखायां गतायां व्योमवर्त्मना ।
उषा जीवमिवापेदे प्रियसंदर्शनाशया ॥ २५७ ॥
साभ्येत्य तस्यास्त्रैलोक्यचित्रं पटमदर्शयत् ।
किं दुष्करमदृश्यं वा योगिनां ज्ञानचक्षुषाम् ॥ २५८ ॥
उषा चित्रपटे दृष्ट्वा सुरासुरनरोरगान् ।
ददर्श दयितं स्वप्नदृष्टं जितशशिस्मरम् ॥ २५९ ॥
अयं स सखि मे धैर्यहारी हृदयतस्करः ।
इत्युषावचनं श्रुत्वा चित्रलेखा जगाद ताम् ॥ २६० ॥

१. 'अश्रान्तविपुलोच्छ्वासां' ख.

दिष्ट्या धन्यासि सुभगे यस्यास्ते नवमन्मथः ।
लक्ष्मीवल्लभपौत्रोऽयमनिरुद्धाभिधः प्रियः ॥ २६१ ॥
प्रद्युम्नतनयस्यास्य लावण्यामृतदीधितेः ।
कान्त्या क्लैव्यमिवायान्ति सुरविद्याधराङ्गनाः ॥ २६२ ॥
रूपेणाप्रतिमेन नेत्रसुखदः कंदर्पदर्पच्छिदा
शौर्ये वज्रधरोपमां न सहते धीरः सुमेरोरयम् ।
अस्यामर्त्यमृगेक्षणाभिरनिशं सोत्कण्ठमाकर्णितं
चन्द्रोत्सङ्गमृगापहं गुणगणं गायन्ति खे खेचराः ॥ २६३ ॥
पश्चिमाब्धौ हरिपुरी द्वारका वृष्णियादवैः ।
सिंहैरिव महोत्साहैर्गुप्ता हैमवती गुहा ॥ २६४ ॥
तस्यामन्तःपुरे श्रीमान्वसत्येष प्रियासखः ।
आनीयते कथं तावदिति दोलायते मनः ॥ २६५ ॥
त्वद्भाग्यानि पुरस्कृत्य गच्छामि गगनेन ताम् ।
हेलार्पिताद्भुतनिधिर्विधिः सिद्धिं विधास्यति ॥ २६६ ॥
इत्युक्त्वाकाशमाविश्य सा ययौ द्वारकां क्षणात् ।
कुर्वाणा रशनारत्नैः शक्रचापचिता दिशः ॥ २६७ ॥
सा गूढमायया हृत्वा रत्नपर्यङ्कशायिनम् ।
आनिनाय मुहूर्तेन व्योम्ना प्रद्युम्ननन्दनम् ॥ २६८ ॥
स्वप्नवृत्तान्तमावेद्य स कन्यान्तःपुरान्तरम् ।
प्रवेशितस्तयापश्यदुषां रतिमिव स्मरः ॥ २६९ ॥
स तां दृष्ट्वा नवोन्मेषनिर्माणातिशयं विधेः ।
अचिन्तयत्सुधापूरैरिव पूरितलोचनः ॥ २७० ॥
इन्दोः संक्षयरक्षणाक्षतसुधा किं वेधसा निर्मिता
किं धैर्यापहरा हरस्य विहिता कामेन कान्ता तनुः ।
किं तारुण्यवसन्तकान्तिललिता शृङ्गारसिक्ता लता
किं लावण्यतरङ्गिणी पुनरियं जन्मान्तराप्ता रतिः ॥ २७१ ॥

१. 'प्रधास्यति' क.

कटाक्षः संधत्ते कुवलयकुलकैव्यकलनां
मुखे दृश्यश्चन्द्रद्युतिहरणहेलापरिचयः ।
असंरुद्धा बाधाधरदलरुचिर्विद्रुमतरो-
रहो सारङ्गाक्ष्याः प्रसभविजयी रूपविभवः ॥ २७२ ॥
इति सर्वाङ्गनिर्मग्नलोचनस्तां विलोकयन् ।
अनिरुद्धोऽधरे तस्या बभूवाशापथातिथिः ॥ २७३ ॥
सापि साङ्गमिवानङ्गं तमभ्यस्तं मनोरथैः ।
विलोक्य प्रत्ययासत्ये पुनः स्वप्नमशङ्कत ॥ २७४ ॥
सोत्कम्पा कररोधेन राविणीं मणिमेखलाम् ।
मुहुर्मौनवतीं चक्रे पैशुन्यचकितेव सा ॥ २७५ ॥
नवे मौनवति प्रेम्णि तयोः प्राह सखी पुरः ।
दन्तांशुसूत्रैः कुर्वाणा ग्रथनं चित्तयोरिव ॥ २७६ ॥
यस्त्वया प्रेमकुसुमैर्दैवैश्चित्रपटेऽर्चितः ।
अहो भक्त्या स ते तुष्टः सखि प्रत्यक्षतां गतः ॥ २७७ ॥
स्वप्नसंपादितप्रीतिर्योऽर्थितस्तैर्मनोरथैः ।
प्राक्पूजा कीदृशी तस्य ब्रूहि त्वमुपपद्यते ॥ २७८ ॥
मौनमालम्बसे पृष्टा दृष्टा क्षोणीं निरीक्षसे ।
लतेव कम्पसे कम्पात्कोऽयं ते चित्तविभ्रमः ॥ २७९ ॥
मानस्तत्क्षणशासनागतजने सुभ्रु क्व संभाव्यते
स्वप्नाभ्यस्तसमागमेऽपि नववर्तिक लज्जया लीयसे ।
का तस्मिन्परता सदा वसति यश्चित्ते निबद्धो गुणैः
प्रारब्धा सखि कस्य तावदियती प्रेम्णि त्वयापह्नुतिः ॥२८०॥
इति सख्यां ब्रुवाणायामनिरुद्धः प्रगल्भताम् ।
निनाय दयितां प्रौढः प्रणयैः प्रेमपेशलैः ॥ २८१ ॥
तदा प्रीतेर्यदायत्तं चिन्तितं यन्मनोरथैः ।
मन्मथेन यदादिष्टं स्वैरं तत्तदभूत्तयोः ॥ २८२ ॥

१. 'धवः' ख-ग.

दिनेष्वथ प्रयातेषु प्रच्छन्नधृतवल्लभा ।
उषाभूदभिमानाक्तव्यक्तसंभोगलक्षणा ॥ २८३ ॥

व्याकीर्णा कबरी मुखं वितिलकं ताम्बूललिप्तेऽक्षिणी
कण्ठे कङ्कणलक्ष्म हारविरतिर्दंशोऽधरे निर्व्रणः ।
प्रातः प्रच्युतचन्दनास्तनतटी सायं स्ववेषक्रिया
संभोगाभरणा तनुर्वरतनोः शङ्कास्पदत्वं ययौ ॥ २८४ ॥

किंचिन्मुकुलिते लोके कन्यायाः कामलक्षणे ।
फुल्ले शनैः कर्णपथं बाणस्यापि कथा ययौ ॥ २८५ ॥

ततस्तद्भ्रूभ्रमादिष्टाः किंकराः क्रूरकारिणः ।
आययुर्युद्धसंनद्धाः कन्यकान्तःपुराङ्गणम् ॥ २८६ ॥

निरुद्धः प्रियया यत्नादनिरुद्धोऽथ सस्मितः ।
घोरकिंकरसंघाताञ्जघान परिघायुधः ॥ २८७ ॥

हतेऽयुते किंकराणां स्वयं बाणः समाययौ ।
रथी बाहुसहस्रात्तसमस्तायुधमण्डलः ॥ २८८ ॥

शस्त्रवृष्टिं तदुत्सृष्टां प्राद्युम्निः खङ्गचर्मभृत् ।
छित्त्वा धैर्यनिधिश्चक्रे रणे बाणस्य विस्मयम् ॥ २८९ ॥

उषा संत्रासतरला पितुः पत्युश्च संगरे ।
प्राणेशपक्षपातेन भेजे संदेहसाध्वसम् ॥ २९० ॥

बाणेन प्रहितां शक्तिं मृत्युदंष्ट्रामिवोत्कटाम् ।
आदाय तस्मै प्राद्युम्निस्तामेव प्राहिणोद्बली ॥ २९१ ॥

परहस्तगता शक्तिः प्रविष्टान्तः कृतव्यथा ।
निजा सुतेव बाणस्य हृदये शल्यतां ययौ ॥ २९२ ॥

वीरं विज्ञाय तं बाणः स्पष्टयुद्धेन दुर्जयम् ।
आदाय तामसीं मायामदृष्टः प्रविवेश खम् ॥ २९३ ॥

---

१. 'मानात्तु' ख; 'मानार्थं' घ. २. अत्र संधिरनुचितः. ३. 'अपि' ख. ४. 'चर्मखड्ग' ख.

निरन्तरैस्तदुत्सृष्टैर्वेष्टिताङ्गं भुजंगमैः ।
दृष्ट्वानिरुद्धं संरुद्धमुषाभून्मोहमीलिता ॥ २९४ ॥
बद्धेऽनिरुद्धे तनयां बाणः स्वैरापचारिणीम् ।
आकृष्टः स्नेहकोपाभ्यां न तत्याज न चाग्रहीत् ॥ २९५ ॥
असंस्पृष्टं याच्ञावचनघनदैन्येन वदनं
न कृच्छ्रेऽप्यारूढा गुणमणिततिर्विक्रयतुलाम् ।
असेवासंतापं वपुरननुभूतप्रभुभयं
कुलं कन्याहीनं नहि नयति मानं मलिनताम् ॥ २९६ ॥
अत्रान्तरे द्वारकायामनिरुद्धापहारजः ।
वृष्णीनामभवत्क्षोभः शोकचिन्तानुबन्धवान् ॥ २९७ ॥
बाणस्य नगरे रुद्धमनिरुद्धं सहोषया ।
विज्ञाय नारदगिरा सस्मार गरुडं हरिः ॥ २९८ ॥
हलायुधेन सहितः प्रद्युम्नेन च सूनुना ।
प्रययौ शोणितपुरं तार्क्ष्यमारुह्य माधवः ॥ २९९ ॥
खे योजनसहस्राणि विलङ्घ्य गरुडध्वजः ।
दीप्तं बाणपुरं दूराद्ददर्शार्कशतोपमम् ॥ ३०० ॥
अग्निमाहवनीयाख्यं तार्क्ष्यः प्राकाररक्षिणम् ।
पीतोद्वान्तखगङ्गाम्बुनिर्झरेण न्यवारयत् ॥ ३०१ ॥
पुरद्वारमथोन्मथ्य प्रविष्टं शार्ङ्गिणं बलात् ।
निःसंख्याः संख्यसंनद्धा दितिजाः पर्यवारयन् ॥ ३०२ ॥
चक्रिचक्रनिकृत्तानां शरीराणि सुरद्विषाम् ।
चक्रुः पक्षक्षयक्षिप्तनिपतत्क्षितिभृद्भ्रमम् ॥ ३०३ ॥
अत्रान्तरे नागपाशपञ्जरे सिंहविक्रमः ।
बद्धोऽनिरुद्धः सस्मार दुर्गां स्तुतिपदार्चिताम् ॥ ३०४ ॥
निष्पिष्टमत्तमहिषासुरमस्तकाग्र-
प्रत्यग्रनिर्गतघनस्रुतिशोणितार्द्रम् ।

पादाम्बुजं पुनरलक्तकभक्तिचित्रं
　वन्दे भवप्रभवतापहरं भवान्याः ॥ ३०५ ॥

शूलप्रहारस्रुतरक्तभरैकबिन्दु-
　संजातघोररुरुलक्षगुरुप्रमाथे ।
पातालमूलगगनान्तविकासितास्य-
　ग्रस्तोग्रदानवतनुं प्रणमामि कालीम् ॥ ३०६ ॥

भीमोद्भवद्विभवसुम्भनिसुम्भकाय-
　निष्पेषदुःसहतराशनिघातघोराम् ।
कात्यायनीं स्वकरकृत्तशिरःशरीर-
　वीरोपहारपरितोषवतीं नमामि ॥ ३०७ ॥

क्षुभ्यत्सप्तार्णवघनरवः पद्मगर्भाण्डखण्डा-
　काण्डभ्रंशप्रसभसरभसः सप्तपातालभेदी ।
धैर्योन्माथी जयति चकिताशेषलोकेश्वराणां
　चण्डश्चण्ड्याः प्रलयसमयोत्साहलीलाट्टहासः ॥ ३०८ ॥

इति स्तुता भगवती दुर्गा दुर्गापहारिणी ।
स्वकरस्फोटितोग्राहिपञ्जरं तममोचयत् ॥ ३०९ ॥

भुजंगपाशनिर्मुक्तः प्राद्युम्निः समराङ्गणम् ।
प्रययौ युध्यमानस्य समीपं कालियद्विषः ॥ ३१० ॥

अथ कल्पान्तपर्जन्यगर्जितोर्जितविभ्रमः ।
बाणासुररणारम्भदुन्दुभिध्वनिरुद्ययौ ॥ ३११ ॥

दैत्येन्द्रायुधवृष्टिनष्टगगने सेनारजःस्फूर्जित-
　ग्रस्ताग्रे(र्के) प्रसरत्पिनाकिविशिखव्रातावकीर्णे रणे ।
कल्पान्तागमशङ्किते त्रिभुवने चेरुः शरीरच्छिदः
　शूराणामनिरुद्धरामसुरजित्प्रद्युम्नमुक्ताः शराः ॥ ३१२ ॥

---

१. 'स्ववर' ख; 'स्वशर' ग. २. 'वीरोपहारनमितां प्रणमामि कालीम्' ख. ३. 'प्रसर' ख. ४. 'हेला' ख.

गरुडादवरुह्याथ बलेन[1] बलिना रणे ।
हलेन हलिना कृष्टा दैत्यदेहा द्विधा ययुः ॥ ३१३ ॥
ततस्त्रिनेत्रानुचरः प्रदीप्तस्त्रिशिख[2]ज्वरः ।
क्षिप्तेन भस्मना रामं भ्रममूर्छाकुलं व्यधात् ॥ ३१४ ॥
संतापमूर्छितं कृष्णस्तं परिष्वज्य विद्रुतम् ।
कृत्वा जटाभिराकृष्य जग्राह ज्वरमञ्जसा ॥ ३१५ ॥
कृष्णोऽप्यथ ज्वराविष्टः श्वसन्रोमाञ्चकर्कशः[3] ।
असृजद्वैष्णवं घोरं ज्वरं रौद्र[4]ज्वरापहम् ॥ ३१६ ॥
ज्वरयोः संप्रवृत्तेऽथ भुवनाकम्पने रणे ।
वैष्णवः प्रलयार्काभः शार्वं ज्वरमपातयत् ॥ ३१७ ॥
कण्ठे निपीड्य निष्पिष्टस्तेन रुद्रज्वरः क्षितौ ।
प्रयातः शरणं कृष्णमवदद्बाष्पगद्गदः ॥ ३१८ ॥
देवेन त्रिपुरारिणा त्रिजगतीजीवापहारक्षमः
सृष्टः स्पष्टविनष्टधैर्यसरणिर्देव त्वयाहं कृतः ।
त्वां यातः शरणं शरीरधृतये त्वन्नाममन्त्राक्षर-
क्षिप्ताप्तस्मृतिजापिनां न भविता मत्स्पर्शतापः क्वचित् ॥ ३१९ ॥
इति भीत्या ब्रुवाणं तं ररक्ष गरुडध्वजः ।
शरणाप्ते विरुद्धेऽपि वैरक्रूरा न साधवः ॥ ३२० ॥
ततः श्रीकण्ठवैकुण्ठौ व्याप्तदेहौ बभूवतुः ।
पिनाकशार्ङ्गनिर्गच्छद्बाणजालैर्निरन्तरैः ॥ ३२१ ॥
क्षणं तुल्ये तयोर्युद्धे जगत्संक्षयकारिणि ।
घनैः शौरिशरासारैर्ययौ विमुखतां हरः ॥ ३२२ ॥
ग्रस्तशक्तेः कुमारस्य जितस्य हरिणा रणे ।
रक्षायै शंभुना सृष्टा तस्थौ नग्नाङ्गना पुरः ॥ ३२३ ॥
अथ बाणः स्वयं योद्धुं मधुसूदनमाययौ ।
क्षिपन्बाहुसहस्रेण दीप्तायुधपरम्पराम् ॥ ३२४ ॥

---

१. 'बलिना' ख-ग. २. 'त्रिशिराः' ख. ३. 'कञ्चुकः' क-घ. ४. 'रुद्र' ख.

सहस्राश्वं रथं तस्य मनोरथमिवायतम्।
ससूतं शरवर्षेण प्रममाथ मुरान्तकः ॥ ३२५ ॥
उपनीतं गणैस्तूर्णं शासनात्त्रिपुरद्विषः।
मयूरमारुरोहाथ बाणः षण्मुखवाहनम् ॥ ३२६ ॥
यत्नेन युध्यमानस्य च्छिन्नास्त्रस्य मुरारिणा।
मुक्तकेशी विवस्त्रा स्त्री बाणस्याग्रे व्यदृश्यत ॥ ३२७ ॥
रक्षायै कोटवीं सृष्टां तस्य देवेन शूलिना।
वञ्चयित्वाच्युतश्चक्रं पार्श्वाञ्चितमथासृजत् ॥ ३२८ ॥
चक्रं क्रमेण पतितं स्कन्धयोः कीर्णपावकम्।
चकर्त क्रकचक्रूरं बाणस्य भुजकाननम् ॥ ३२९ ॥
चक्रोत्कृत्तभुजद्रुमव्रणमुखोद्भूतैर्घनासृग्भरैः
प्रोद्यद्विद्रुमपादपानुकृतिभिस्तुल्यप्रमाणैः क्षणम्।
अप्राप्तोद्धतयुद्धतृप्तिरधिकश्रद्धः स वीरोऽभव-
द्व्याप्तः संततरक्तचन्दनचितैर्जातैरिवान्यैर्भुजैः ॥ ३३० ॥
बाणश्छिन्नभुजोऽभ्येत्य शंभोर्भगवतश्चिरम्।
ननर्त प्रियनृत्तस्य तोषाय प्रणयी पुरः ॥ ३३१ ॥
भक्त्याभवद्भगवतः स भवस्यातिवल्लभः।
वरान्नन्दिसमः श्रीमान्महाकालश्चतुर्भुजः ॥ ३३२ ॥
कल्याणं तनुते यशःपरिचितां लक्ष्मीं ददात्यक्षया-
माक्रान्तिं विदधाति सप्तभुवनन्यस्तेप्सिताज्ञाक्षराम्।
संसारं कुरुते विकारनिकरं[1] निःशेषमेव क्षणा-
द्भक्तिः कल्पलता चराचरगुरोः किं किं न सूते फलम् ॥ ३३३ ॥
उषासहितमादाय प्रद्युम्नतनयं ततः।
द्वारकां विजितारातिर्जगाम गरुडध्वजः ॥ ३३४ ॥
कदाचिदथ देवर्षिर्द्वारकामेत्य नारदः।
अवाप्य पूजामुचितां कथान्ते कृष्णमभ्यधात्[2] ॥ ३३५ ॥

१. 'निकरां' ख-ग; 'निरतं' घ. २. 'अब्रवीत्' क-घ.

गङ्गाभिलाषी नृपतिर्ब्रह्मशापान्महाभिषः ।
भरतस्य कुले जातः शंतनुः प्रतिपात्मजः ॥ ३३६ ॥
गङ्गापि धातुः शापेन पतन्ती वसुभिः पथि ।
वसिष्ठशापपतितैर्होमधेनुनिकारतः ॥ ३३७ ॥
स्वजन्मनेऽर्थिता जाता वधाय च महीं गता ।
स्वतीरोपवनोपान्ते विचचार सुलोचना ॥ ३३८ ॥
तत्र शंतनुना गङ्गा संगमं गजगामिनी ।
भेजे यथेष्टकरणप्रत्याख्यानधृतावधिम् ॥ ३३९ ॥
सा जातानवधीत्सप्तवसून्स्वेच्छाविधायिनी ।
जातेऽष्टमे सुते राज्ञा निरुद्धा प्रययौ दिवम् ॥ ३४० ॥
देवव्रताख्यः स शिशुर्दिवि देवैः कृतव्रतः ।
सर्वविद्यापगाम्भोधिर्ववृधे वसुरष्टमः ॥ ३४१ ॥
दृष्ट्वा कदाचित्कालिन्दीकूले कुवलयेक्षणाम् ।
शंतनुर्दाशतनयां तत्पितुर्याचकोऽभवत् ॥ ३४२ ॥
गाङ्गेयस्त्वत्सुतः क्ष्माभृद्दौहित्रो मे न राज्यभाक् ।
इत्युक्त्वा न ददौ दाशस्तस्मै सत्यवतीं सुताम् ॥ ३४३ ॥
देवव्रतः पितुर्ज्ञात्वा तीव्रस्मरशरव्यथाम् ।
गत्वा ययाचे दाशेशं तनयां विनयोन्नतः ॥ ३४४ ॥
दौहित्रवंशराज्यार्थी स सुतां न ददौ यदा ।
तदा राज्ये विवाहे च गाङ्गेयः समयं व्यधात् ॥ ३४५ ॥
भीषणीयप्रतिज्ञात्वाद्भीष्मोऽयमिति खे चिरम् ।
विचचारोदिताश्चर्यं खेचरोच्चारितं वचः ॥ ३४६ ॥
आनीतामथ भीष्मेण कन्यामासाद्य शंतनुः ।
परितोषाद्ददौ तस्मै स्वच्छन्दनिधनं वरम् ॥ ३४७ ॥
कालेन जनयित्वाथ पुत्रं चित्राङ्गदाभिधम् ।
तस्यां विचित्रवीर्यं च शंतनुस्तनुमत्यजत् ॥ ३४८ ॥

ततश्चित्राङ्गदो राजा गन्धर्वेण प्रमाथिना ।
चित्राङ्गदेन समरे नामद्वेषान्निपातितः ॥ ३४९ ॥
शिशोर्विचित्रवीर्यस्य प्राप्तराज्यश्रियः कृते ।
जहार काशिराजस्य भीष्मः कन्याः स्वयंवरे ॥ ३५० ॥
भ्रात्रे विचित्रवीर्याय हस्तिनापुरमेत्य सः ।
त्यक्त्वा साल्वोत्सुकामम्बामम्बिकाम्बालिके ददौ ॥ ३५१ ॥
राजचूततरौ तस्मिन्नवयौवनमाधवे ।
कान्तालतावलयिते पातिते कालदन्तिना ॥ ३५२ ॥
विच्छिन्ने शंतनोर्वंशे तत्पुत्रक्षेत्रजार्थिना ।
भीष्मेण प्रेरिता साध्वी प्राह सत्यवती शनैः ॥ ३५३ ॥
कानीनस्तनयो मेऽस्ति तत्तु कामात्पराशरात् ।
संजातो यमुनाद्वीपे कृष्णद्वैपायनो मुनिः ॥ ३५४ ॥
तं स्मरामि सुतक्षेत्रपुत्रोत्पत्त्यै तपोनिधिम् ।
उक्त्वेति सा भीष्ममते तं सस्मार स चाययौ ॥ ३५५ ॥
अम्बाश्वश्र्वा विसृष्टाथ तेजोराशिं विलोक्य तम् ।
निमीलिताक्षी तद्दृष्टिस्पृष्टा गर्भं समाददे ॥ ३५६ ॥
अन्धोऽक्षिमीलनात्सूनुर्भावीत्युक्ते महर्षिणा ।
द्वितीयं जनयापत्यमिति माता जगाद तम् ॥ ३५७ ॥
भयपाण्डुरवक्त्रान्यालेभे गर्भं मुनेर्दृशा ।
अप्रसूतिः सुतः पाण्डुर्भवितेत्यभ्यधान्मुनिः ॥ ३५८ ॥
तस्यां भयाद्विसृष्टायां शूद्रायां गर्भसंभवे ।
धर्मावतारमुक्त्वास्याः पुत्रं प्रायान्महामुनिः ॥ ३५९ ॥
जातेऽन्धे धृतराष्ट्रेऽथ पाण्डौ च भुजशालिनि ।
माण्डव्यशापभूर्धर्मः शूद्रायां विदुरोऽभवत् ॥ ३६० ॥

---

१. 'कान्त' ख. २. 'हस्तिना' ख-ग. ३. 'माता' क-घ. ४. 'उक्ता' ख.
५. 'जात्यन्धे' ख-ग.

धृतराष्ट्राय गान्धारीं सुबलस्तनयां ददौ ।
कुन्तिभोजसुतां कुन्तीं पाण्डुर्माद्रीमवाप च ॥ ३६१ ॥
युवा दिग्विजयी पाण्डुर्मृगयाव्यसनी वने ।
मृगरूपरतासक्तमवधीत्किंन्दमं मुनिम् ॥ ३६२ ॥
भविष्यसि त्वं दयितारतिपर्यन्तजीवितः ।
तेनेति शप्तस्त्यक्तश्रीर्ययौ पाण्डुस्तपोवनम् ॥ ३६३ ॥
ततः पुत्रशतं लेभे गान्धारी तुल्यगर्भजम् ।
ज्येष्ठो दुर्योधनस्तेषां तस्य दुःशासनोऽनुजः ॥ ३६४ ॥
कुन्ती मुनिवरावाप्तमन्त्रा भर्तुरनुज्ञया ।
धर्मानिलेन्द्रानाहूय वने पुत्रानजीजनत् ॥ ३६५ ॥
युधिष्ठिरं भीमसेनमर्जुनं च सुरोचितान् ।
सपत्न्या दत्तमन्त्रा च माद्री प्रापाश्विनौ यमौ ॥ ३६६ ॥
स्नातां पुष्पोच्चये माद्रीं विलोक्य कुसुमागमे ।
आलिङ्ग्यानङ्गसङ्गेऽभूत्पाण्डुः शापादजीवितः ॥ ३६७ ॥
प्रयाते त्रिदिवं पाण्डौ पाण्डुपुत्राः पितृव्यजैः ।
वृद्धिं गता धार्तराष्ट्रैः सह दुर्योधनादिभिः ॥ ३६८ ॥
भीष्मः पितामहस्तेषां चापाचार्यं कृपं व्यधात् ।
द्रोणं च शर्वशिष्यस्य शिष्यं रामस्य धन्विनः ॥ ३६९ ॥
अश्वत्थामा प्रियः सूनुर्द्रोणस्य तनयोऽभवत् ।
यथार्जुनः समस्तास्त्रविद्याविमलदर्पणः ॥ ३७० ॥
कन्यायां गूढजन्मा यः कर्णः कुन्त्यां विवस्वतः ।
प्रयातः सूतपुत्रत्वमस्त्राणि प्राप भार्गवात् ॥ ३७१ ॥
संस्पर्धयार्जुनरणाह्वानधीरोऽस्त्रदर्शने ।
नीतस्तत्प्रतिमल्लत्वात्कौरवेणाङ्गराजताम् ॥ ३७२ ॥
ततः कर्णेन संमन्त्र्य भ्रात्रा दुःशासनेन च ।
दुर्योधनः पाण्डवानां धियं गूढवधे व्यधात् ॥ ३७३ ॥

१. 'सुभद्र' क-ख-ग. २. 'राज' ख-ग. ३. 'किन्दिरं' क-ख-ग. ४. 'तत्र' ख-ग.

ते तेन विहिते दीप्ते जतुवेश्मनि निर्गताः ।
विदुरेण रहः स्नेहान्निर्दिष्टविलनिर्गमाः ॥ ३७४ ॥
युधिष्ठिरार्जुनौ कुन्तीं वहन्भीमो महाबलः ।
नकुलं सहदेवं च विवेश निशि काननम् ॥ ३७५ ॥
तत्रोग्रविग्रहं हत्वा हिडिम्बं राक्षसेश्वरम् ।
भीमस्तदनुजां भेजे हिडिम्बां दिव्यरूपिणीम् ॥ ३७६ ॥
जाते घटोत्कचे तस्याः पुत्रे भीमपराक्रमे ।
एकचक्रां पुरीं जग्मुः प्रच्छन्नाः पाण्डुनन्दनाः ॥ ३७७ ॥
प्रजाक्षयक्षमस्तत्र राक्षसोऽभूद्बकाभिधः ।
यस्मै राजान्नशकटं प्राहिणोत्सनरं सदा ॥ ३७८ ॥
स्थिता विप्रगृहे कुन्ती सह भिक्षाशनैः सुतैः ।
बकवारे द्विजस्याप्ते भीमं तद्दययादिशत् ॥ ३७९ ॥
व्रजन्भीमोऽन्नशकटं भुञ्जानः क्रोधसंमुखम् ।
बकं हत्वा द्विजगृहं विवेशालक्षितो निशि ॥ ३८० ॥
अथ दूरपथायातैः कथितं पथिकद्विजैः ।
नानाकथाप्रसङ्गेन शुश्रुवुः पाण्डुनन्दनाः ॥ ३८१ ॥
पाञ्चाल्यो द्रुपदः पूर्वं द्रोणस्य सुहृदः शिशुः ।
व्यधाद्दास्यामि ते प्राप्तराज्यार्धमिति संविदम् ॥ ३८२ ॥
द्रोणेन प्राप्तराज्योऽथ सोऽर्थितः प्रददौ न तत् ।
भिक्षाभुग्ब्राह्मणो राज्ञः कथं मित्रमिति ब्रुवन् ॥ ३८३ ॥
इति द्रोणः कृतस्तेन राज्ञा भग्नमनोरथः ।
अर्जुनेन रणे बद्धं तं राज्यार्धमदापयत् ॥ ३८४ ॥
ततस्तेनावमानेन पुत्रं द्रोणवधक्षमम् ।
अभिचारोग्रयागेन द्रुपदः समवाप्तवान् ॥ ३८५ ॥
यागाग्निमध्याज्जातोऽस्य धृष्टद्युम्नाभिधः सुतः ।
कृष्णा च कन्यका यस्याः प्रत्यासन्नः स्वयंवरः ॥ ३८६ ॥

वयं तत्रैव गच्छामः सर्वराजसमागमे ।
प्राप्तुं प्रतिग्रहाभ्यर्चामित्युक्त्वा प्रययुर्द्विजाः ॥ ३८७ ॥
ततः पाञ्चालनगरं व्रजन्तः पाण्डवा निशि ।
गन्धर्वराजं ददृशुर्गङ्गाम्भसि विहारिणम् ॥ ३८८ ॥
विवस्त्रान्तःपुरवधूदर्शनक्रुद्धमर्जुनः ।
व्यधाद्दग्धरथं युद्धे तमाग्नेयास्त्रतेजसा ॥ ३८९ ॥
युधिष्ठिरेण कृपया रणे रक्षितजीवितः ।
सख्यं किरीटिना कृत्वा जितश्चित्ररथो ययौ ॥ ३९० ॥
ततः प्रभाते प्रच्छन्नाः पाण्डवा विप्ररूपिणः ।
प्रविश्य पाञ्चालपुरं कुम्भकारगृहे स्थिताः ॥ ३९१ ॥
इत्युक्त्वा नारदे याते संकर्षणजनार्दनौ ।
जग्मतुर्लक्ष्यभेदाङ्कं द्रष्टुं कृष्णास्वयंवरम् ॥ ३९२ ॥
तौ पाञ्चालपुरं प्राप्य सर्वराजसमागमे ।
पूज्यमानौ विविशतुः स्वयंवरसभागृहम् ॥ ३९३ ॥
हेमासनोपविष्टेषु द्रौपदी सर्वराजसु ।
जगज्जयपताकेव कंदर्पस्य समाययौ ॥ ३९४ ॥
राधावेधपणे तस्मिन्भुजलभ्ये स्वयंवरे ।
अशक्ताः पार्थिवाः सर्वे ययुर्लज्जानिलीनताम्[1] ॥ ३९५ ॥
विलक्षेषु क्षितीशेषु द्विजमध्यादथोत्थितः ।
विद्ध्वा धनंजयो लक्ष्यं क्षितौ क्षिप्रमपातयत् ॥ ३९६ ॥
हारं कण्ठे विनिक्षिप्य द्रौपद्या फाल्गुने वृते ।
युद्धोद्धताः समुत्तस्थुः क्रुद्धाः सर्वे क्षितीश्वराः ॥ ३९७ ॥
जित्वाथ शल्यकर्णादीन्वीरान्भीमधनंजयौ ।
पुरः कृष्णां समादाय ययतुर्भ्रातृभिः सह ॥ ३९८ ॥
भिक्षेवोपनता कृष्णा सहेयं भुज्यतामिति ।
चक्रुस्ते शासनान्मातुः सह भोगाय संविदम् ॥ ३९९ ॥

---

१. 'विलीनताम्' ख-ग.

रामकृष्णौ निशि स्वैरं कुम्भकारगृहे स्थितान् ।
पाण्डवानेत्य सानन्दौ प्रेम्णा संभाष्य जग्मतुः ॥ ४०० ॥
अन्विष्य द्रुपदस्तेषां विज्ञायाधर्मनिश्चयम् ।
कृष्णाया बहुपत्नीत्वं विरुद्धं नाभ्यमन्यत ॥ ४०१ ॥
ततस्तं भगवान्व्यासः समभ्येत्यावदन्मुनिः ।
पञ्चेन्द्राः समदाः पूर्वं क्रुद्धा बद्धाः पिनाकिना ॥ ४०२ ॥
तं[1] एव पाण्डवा जाताः स्वर्गश्रीस्तव चात्मजा ।
तेषामेकैव सा पत्नी नैवायं धर्मसंकरः ॥ ४०३ ॥
इत्युक्त्वा मुनिना दत्तदिव्यदृष्टिर्नरेश्वरः ।
सत्यं विज्ञाय तत्सर्वं तद्विवाहममन्यत ॥ ४०४ ॥
ज्ञात्वा जतुगृहान्मुक्तान्पाण्डवान्प्राप्तसंश्रयान् ।
हस्तिनापुरमानाय्य धृतराष्ट्रोऽभ्यपूजयत् ॥ ४०५ ॥
इन्द्रप्रस्थेऽभिषिक्तोऽथ तेन राजा युधिष्ठिरः ।
गुणैः श्रियं श्रिया धर्मं धर्मेण प्राप्तवान्यशः ॥ ४०६ ॥
निर्दिष्टां नारदेनाथ मुनिना भेदभीरुणा ।
भूतये पाण्डवाश्चक्रुर्मर्यादां दृढनिश्चयाः ॥ ४०७ ॥
अन्तःपुरे भ्रातरं यः पश्येत्कृष्णासखं रहः ।
अविश्रान्तः स तीर्थानि व्रजेद्द्वादशवत्सरीम् ॥ ४०८ ॥
चौरात्तं गोगणं विप्राक्रन्दाकृष्टस्ततोऽर्जुनः ।
आजहार समादाय धर्मजान्तःपुराद्धनुः ॥ ४०९ ॥
स्मृत्वाथ संविदं पार्थस्तीर्थार्थी जाह्नवी जले ।
मज्जन्नुलूपीं पाताले नागकन्यामवाप्तवान् ॥ ४१० ॥
जनयित्वा सुतं तस्यामिरावन्तं जगाम सः ।
नगरं मणिपूराख्यं चित्रवाहनभूपतेः ॥ ४११ ॥
प्राप्य तस्य सुतां कन्यां पार्थः पृथुललो[2]चनाम् ।
चित्राङ्गदां सुतं तस्यां बभ्रुवाहनमाप्तवान् ॥ ४१२ ॥

१. 'त एव पाण्डवा नाथ' क; 'उवाच पाण्डवा नाथ' घ. २. 'लोचनः' क-ख-ग.

सर्वतीर्थप्लुतः प्राप्य प्रभासं श्वेतवाहनः।
रैवताचलयात्रायां प्राप वृष्णिसमागमम्॥ ४१३॥
अर्जुनोऽथ धृतोत्कण्ठः शैलारोहसमुत्सवे।
उत्साहोच्छलितं चेतः सानुगस्य हरेर्व्यधात्॥ ४१४॥
तत्र कृष्णानुजां दृष्ट्वा सुभद्रां कामकौमुदीम्।
कन्यामनुमते शौरेर्जहार श्वेतवाहनः॥ ४१५॥
युद्धोद्धतान्वृष्णिवीरान्परिसान्त्व्य[2] जनार्दनः[1]।
निःसंख्यं द्रविणं दातुमर्जुनाय ययौ स्वयम्॥ ४१६॥
इन्द्रप्रस्थमथासाद्य सुभद्रासहितोऽर्जुनः।
प्रणम्य धर्मजं भेजे कृष्णेन सहितः सुखम्॥ ४१७॥
अभिमन्युं सुभद्रायां पार्थः पुत्रमजीजनत्।
द्रौपदी प्रतिविन्ध्याद्यान्पतिभ्यः पञ्च चात्मजान्॥ ४१८॥
ततः कदाचिद्यमुनाजलकेलिविहारिणम्।
सकृष्णमर्जुनं विप्ररूपः प्राह हुताशनः॥ ४१९॥
उचितं दीयतां मह्यं भवद्भ्यां भोजनं हितम्।
अर्थिनामर्थनावन्ध्या न भवन्ति भवद्विधाः॥ ४२०॥
श्वेतकेर्नृपतेः पूर्वं यज्ञे द्वादशवार्षिके।
अच्छिन्नाज्यभरेणाहमनलो जडतां गतः॥ ४२१॥
वनं स्वास्थ्याय सत्त्वाढ्यं दग्धुमिच्छामि खाण्डवम्।
रक्षतीन्द्रः सुहृन्मेघैस्तक्षकस्यास्पदं हि[3] तत्॥ ४२२॥
व्यस्तमेघौघविघ्नोऽहं भवत्सायकसंचयैः।
अखण्डः खाण्डववनं ज्वलाम्येतन्ममाशनम्॥ ४२३॥
इति वह्निर्वदन्नर्थी ताभ्यामङ्गीकृतेप्सितः।
धनुः पार्थाय गाण्डीवं ददौ चक्रं च चक्रिणे॥ ४२४॥
तद्दत्तं रथमारुह्य तदीयाक्षयसायकैः।
हरिणा सह संनद्धः किरीटी खाण्डवं ययौ॥ ४२५॥

१. 'दयानन्दः' क-घ. २. 'परिमन्त्र्य' क. ३. महत्' ख.

अग्नौ प्रज्वलिते वराहमहिषव्याघ्रद्विपद्वीपिनां
निष्पीतायुषि गाढलीढगगने दैत्याहिदेहद्रुहि ।
रुद्धे मेघजलेऽर्जुनास्त्रपटलैर्युद्धोद्धतं वज्रिणं
वि(जि)ष्णुः सायकवर्षिणं विमुखतां बाणैर्निनायाक्षयैः ॥४२६॥
सुतमथ भयलोलं तक्षकस्याश्वसेनं
जठरमपि जनन्याः संप्रविश्य द्रवन्तम् ।
अकृत दिवि किरीटी पत्रिणा खण्डपुच्छं
मयमपि शरणाप्तं चक्रि[1]भीतं ररक्ष ॥ ४२७ ॥
ततः कृष्णाज्ञया दिव्यां सभां मणिमयीं मयः ।
विदधे धर्मपुत्रस्य प्राणरक्षाप्रतिक्रियाम् ॥ ४२८ ॥
तस्यां सभायामाश्चर्यनलिनीं निर्ममे मयः ।
नीलरत्नोत्पलवतीं हेमाब्जां स्फटिकोदकाम् ॥ ४२९ ॥
सभासीनमथाभ्येत्य धर्मजं नारदोऽवदत् ।
राजन्न लोकपालानां त्वत्सभासदृशी सभा ॥ ४३० ॥
यजस्व राजसूयेन कुरुष्व सफलां श्रियम् ।
इति त्वामवदत्पाण्डुः पिता शक्रसमास्थितः ॥ ४३१ ॥
इत्युक्त्वा नारदे याते राजसूयमनोरथम् ।
अकुण्ठोत्कण्ठया राजा वैकुण्ठाय न्यवेदयत् ॥ ४३२ ॥
कृष्णस्तमूचे श्लाघ्यैषा धर्मधीः किं तु मागधे ।
न जीवति जरासंधे क्रतुः कर्तुं स शक्यते ॥ ४३३ ॥
रुद्रयागोपहाराय तेन रुद्धा गिरिव्रजे ।
षडशीतिर्नृपतयस्तस्य शेषाश्चतुर्दश ॥ ४३४ ॥
शरीरार्धद्वयं जातं जरा निशि निशाचरी ।
संधाय विदधे बालं जरासंधं तमुत्कटम् ॥ ४३५ ॥
तत्संनिरोधविश्वस्ताः संत्यज्य मथुरां वयम् ।
विधाय द्वारकां दुर्गां पश्चिमाब्धितटे स्थिताः ॥ ४३६ ॥

१. 'चक्र' ख-ग.

इति स्वैरं ब्रुवाणेन नृपः संमन्त्र्य शौरिणा ।
व्यादिशन्मागधवधे भीमपार्थौ भुजाविव ॥ ४३७ ॥
ततः स्नातकवेषेण प्रच्छन्नक्षत्रवृत्तयः ।
जरासंधपुरीं जग्मुः कृष्णभीमधनंजयाः ॥ ४३८ ॥
तत्र त्रयोदशाहानि युयुधाते भुजायुधौ ।
वीरौ भीमजरासंधौ श्रान्तोऽभून्मगधस्ततः ॥ ४३९ ॥
ततः संधिं द्विधा कृत्वा हते भीमेन मागधे ।
मुमोच कृष्णः क्षितिपान्यज्ञागमनसंविदा ॥ ४४० ॥
भीमः किरीटी नकुलः सहदेवश्च दिग्जये ।
आजह्रुर्विपुलं वित्तं राज्ञे यज्ञभरक्षमम् ॥ ४४१ ॥
कृतेषु शैलतुल्येषु रत्नकाञ्चनराशिषु ।
राजसूयसमारम्भः प्रावर्तत महीपतेः ॥ ४४२ ॥
प्राप्ता निमन्त्रितास्तस्मिन्भीष्मद्रोणादयः क्रतौ ।
धृतराष्ट्रः सविदुरः सामात्यश्च सुयोधनः ॥ ४४३ ॥
अशेषदेवर्षिभृते सर्वराजमये मखे ।
अर्घ्यार्चितं हरिं सेहे शिशुपालो न भूपतिः ॥ ४४४ ॥
तस्याधिक्षेपदक्षस्य क्ष्मापतेः क्षयलक्ष्मणा ।
न्यपातयत्क्षितौ क्षिप्रं चक्रेणाधोक्षजः शिरः ॥ ४४५ ॥
क्रतौ समाप्ते यातेषु महर्षिषु नृपेषु च ।
तस्थौ दुर्योधनस्तत्र शकुनिश्चास्य मातुलः ॥ ४४६ ॥
पद्मिन्यां विहरन्वारिशङ्कया स्फाटिके जले ।
चरन्नुत्क्षिप्तवसनः सत्याम्भसि ममज्ज सः ॥ ४४७ ॥
तस्य स्खलितमालोक्य हर्म्यस्था राजवल्लभाः ।
जहसुर्भीमसेनश्च बभूवाङ्कुरितस्मितः ॥ ४४८ ॥
लज्जावमानमलिनः कौरवः स्वपुरं व्रजन् ।
पृष्टः शकुनिना प्राह ग्लानिवैवर्ण्यकारणम् ॥ ४४९ ॥

१. 'शान्तो' ख-ग. २. 'वृते' ख-ग.

धर्मसूनोर्मखे सा श्रीस्ते भूपालाः करप्रदाः ।
संख्यातीतं च तद्दानं मर्मशल्यायते मम ॥ ४९० ॥
पद्मिन्यामुपहासो मे पद्मस्येव हिमाशनिः ।
पतितः क्षीयते जाने न शरीरक्षयं विना ॥ ४९१ ॥
इति प्रलापी शोकोष्णं[1] द्वेषावेशात्सुयोधनः ।
वार्यमाणः शकुनिना न्यवर्तत न दुर्मतिः ॥ ४९२ ॥
परोत्कर्षद्वेषः खरखदिरचूर्णानलनिभ-
　श्च्युतश्चित्ते दाहं दिशति निशितक्लेशमसताम् ।
परोत्साहे चन्द्रप्रचयसचिवः किं च महता-
　मनन्तः संतोषश्चरति हृदये चन्दनरसः ॥ ४९३ ॥
ततः स धृतराष्ट्राय विवर्णः पाण्डुरः कृशः ।
निवेदितः शकुनिना तं द्यूताज्ञामयाचत ॥ ४९४ ॥
कृच्छ्रात्कृताभ्युपगमः स पित्रा द्यूतकैतवे ।
अकारयन्मणिमयैः कुशलैः शिल्पिभिः सभाम् ॥ ४९५ ॥
स धर्मजं राजसूयसमयादनिवर्तिनम्[2] ।
आहूय विदधे छद्मद्यूतं शकुनिमायया ॥ ४९६ ॥
कूटाक्षक्षपिताशेषकोषसैन्यपरिच्छदः ।
पणं भ्रातॄनथात्मानं कृष्णां च विदधे नृपः ॥ ४९७ ॥
दुःशासनकराकृष्टकेशीमथ रजस्वलाम् ।
कृष्णां द्यूतजितां दासीमानिनाय सुयोधनः ॥ ४९८ ॥
तत्कोपादकरोद्भीमः प्रतिज्ञामूरुभञ्जने ।
युधि दुर्योधनस्यासृक्पाने दुःशासनस्य च ॥ ४९९ ॥
वने द्वादशवर्षाणि निवासाय पणे कृते ।
त्रयोदशे तथाज्ञाते विजिताः पाण्डवा ययुः ॥ ४६० ॥
हारार्हे तनुचीनपट्टपवनत्वङ्गत्तरङ्गोद्भवे[3]
　धृत्वाङ्गे हरिचन्दनेन्दुमृगजाभ्यङ्गे कुरङ्गत्वचम् ।

१. 'कूट' क-ख. २. 'अतिवर्तनम्' ग-घ. ३. 'तुरङ्गोद्भवे' ख-ग.

कृत्वा रत्नकिरीटधाम्नि[1] च जटा जग्मुर्वनं पाण्डवा
निःसत्या भ्रमयन्ति पण्यवनिताप्रेमोपमाः संपदः ॥ ४६१ ॥

स्खलद्विद्युल्लेखाङ्कुरमुखमयूखोपमसुखाः
श्रियश्चापाकर्षोच्चलितहरिणीवेगगमनाः।
विवाहोत्साहाप्ताः क्षणमिव सुहृद्बान्धवजना
न संसारे स्वप्नभ्रमपरिचये किंचिदचलम् ॥ ४६२ ॥

ततः स्तुतिप्रसन्नार्कनिर्दिष्टाक्षयभोजनैः[2]।
द्विजपूजाजुषस्तस्थुः काम्यके पाण्डवा[3] वने ॥ ४६३ ॥

धृतराष्ट्रं परित्यज्य भ्रातृजच्छद्मखेदवान्।
विदुरः काम्यकं यातः प्रार्थितः पुनराययौ ॥ ४६४ ॥

सोऽवदद्भ्रातरं राजन्पुत्रस्नेहवता त्वया।
कुललक्ष्मीलतामूले कुठारः कठिनोऽर्पितः ॥ ४६५ ॥

यत्प्राह भगवान्व्यासः पथ्यं तन्न कृतं हितम्।
श्वभ्रसुता प्रबुध्यन्ते न निपातव्यथां विना ॥ ४६६ ॥

बन्धुसंध्यर्थनाभङ्गकोपशापः क्षयक्षमः।
मैत्रेयमुनिना दत्तः कष्टं न गणितस्त्वया ॥ ४६७ ॥

भीमाद्भीमं भयं शङ्के येन रावणसंनिभः।
स क्रूरकर्मा किर्मीरः कानने राक्षसो हतः ॥ ४६८ ॥

विदुरेणेत्यभिहितं नामन्यत महीपतिः।
दैवादिष्टनिपातानां मिथ्यैवालम्बनक्रिया ॥ ४६९ ॥

वने पाण्डुसुतान्दृष्ट्वा क्रुद्धः कौरवदुर्नयात्।
अभिमन्युं सुभद्रां च समादाय हरिर्ययौ[4] ॥ ४७० ॥

भीष्मद्रोणास्त्रमाहात्म्यचिन्ताकुलनृपाज्ञया।
अथास्त्रार्थी ययौ पार्थस्तपसे तुहिनाचलम् ॥ ४७१ ॥

---

१. 'धामनि जटा' ख. २. 'भोजनाः' ख. ३. 'पाण्डवाः काम्यके' ख. ४. 'ययौ हरिः' ख.

तीव्रं तपस्यतस्तस्य सत्त्वसारपरीक्षकः ।
देवः किरातरूपेण त्रिपुरारिः समाययौ ॥ ४७२ ॥
एकसूकरनिर्भेदस्पर्धाबन्धविरुद्धयोः ।
युद्धमत्युद्धतं[1] कूटकिरातार्जुनयोरभूत् ॥ ४७३ ॥
स्मरारिशबरेणाथ ग्रस्तशस्त्रः प्रमाथिना ।
युयुधे बाहुयुद्धेन धैर्यराशिर्धनंजयः ॥ ४७४ ॥
निपीड्य चण्डीपतिना निश्चेष्टः पातितः क्षितौ ।
गाण्डीवधन्वा प्रत्यक्षं निरीक्ष्य त्र्यक्षमब्रवीत् ॥ ४७५ ॥

दर्पोद्धतत्रिपुरकाननपावकाय
　भक्तार्तितापतुहिनद्युतिमण्डलाय ।
संसारघोरतिमिरोत्कटभास्कराय
　तुभ्यं त्रिधामशबलाय नमः शिवाय ॥ ४७६ ॥

इति स्तुतिकृतानन्दसुधासंपूर्णमानसात्[2] ।
अस्त्रं पाशुपतं तुष्टात्किरीटी प्राप धूर्जटेः ॥ ४७७ ॥
संप्राप्तलोकपालास्त्रः सहस्रतुरगं रथम् ।
शक्रप्रेषितमारुह्य विजयस्त्रिदिवं ययौ ॥ ४७८ ॥
प्रणम्य तत्र वृत्रारिं तद्गाढालिङ्गनातिथिः ।
तदासनार्धं तत्प्रीतिनिर्दिष्टं प्राप पाण्डवः ॥ ४७९ ॥
पार्थमिन्द्रासनार्धस्थं दृष्ट्वा शक्रगिरा मुनिः ।
तद्वृत्तान्तं ययौ वक्तुं लोमशः पाण्डवान्वनम् ॥ ४८० ॥
प्राप्तपूजासनस्तेभ्यः स निवेद्यार्जुनोदयम् ।
तीर्थयात्राधृतोत्साहं विदधे धर्मनन्दनम् ॥ ४८१ ॥
नैमिषाद्येष्वथ स्नाताः सर्वतीर्थेषु पाण्डवाः ।
गन्धमादनशैलाङ्कं बदर्याश्रममाययुः ॥ ४८२ ॥
पवनप्रेरितं तत्र दिव्यपद्मं पुरश्च्युतम् ।
आदाय द्रौपदी भीमं कटाक्षेण निरैक्षत ॥ ४८३ ॥

१. 'अत्यद्भुतं' ख-ग. २. 'मानसः' क-घ.

अन्यपद्मार्थितां तस्य धीमान्विज्ञाय मारुतिः ।
ययौ सौरभमार्गेण धनदाध्युषितां दिशम् ॥ ४८४ ॥
स व्रजन्काञ्चनलतानिचयाचितवर्त्मना ।
दिदेश मददारिद्र्यं सिंहनादेन दन्तिनाम् ॥ ४८५ ॥
पादन्यासाद्धुतगिरेस्तस्य शब्देन विस्मितः ।
हनुमान्मार्गमाश्रित्य तस्थौ स्वल्पवपुः पुरः ॥ ४८६ ॥
सोऽल्परूपं कपिं दृष्ट्वा जानुसंधिकृताननम् ।
चकारोत्सारणरवं घनं घट्टितदिक्तटः ॥ ४८७ ॥
शनैरुन्मील्य नयने तं जगाद प्लवंगमः ।
किमयं मदसंरम्भस्तव मिथ्यैव निर्जने ॥ ४८८ ॥
नादेन मां खेदयता विश्रान्तं रोगदुर्बलम् ।
दर्शितं कृशशूरेण भवता बत पौरुषम् ॥ ४८९ ॥
इतःपरं न गन्तव्यं देशोऽयं सिद्धसेवितः ।
सर्वथा यदि गन्तासि पुच्छमुत्सार्य गम्यताम् ॥ ४९० ॥
इत्युक्ते कपिना भीमस्तत्पुच्छोत्सारणाक्षमः ।
श्रान्तः पतन्मुखेनाधस्तमभाषत विस्मितः ॥ ४९१ ॥
को भवान्किमनन्तात्मा किं मेरुः किं हिमाचलः ।
मार्गं देहि न लङ्घ्यो हि देही देहितनुस्थितः ॥ ४९२ ॥
यदि न स्यात्त्वान्तःस्थः परमात्मा सनातनः[2] ।
साचलं लङ्घयेय त्वां हनुमानिव सागरम् ॥ ४९३ ॥
श्रुत्वैतत्कपिना पृष्टः क एष हनुमानिति ।
भीमोऽसौ हनुमद्वृत्तं भ्रातृत्वं[3] च न्यवेदयत् ॥ ४९४ ॥
अहं स हनुमान्भीम तेनेत्युक्ते तदार्थितः ।
कपिः सूर्यपथावाप्तं दीप्तं वपुरदर्शयत् ॥ ४९५ ॥
संनिधानं करिष्यामि धनंजयरथध्वजे ।
इत्युक्त्वालिङ्गितस्तेन भीमः प्रायात्सविस्मयः ॥ ४९६ ॥

१. 'आवृत्य' ख-ग. २. 'जनार्दनः' ख-ग. ३. 'भ्रातृव्यं' क-घ.

कुबेरनलिनीं प्राप्य भीमः कनकपङ्कजम् ।
जहार हेमपद्मानि हत्वा गुह्यककिंकरान् ॥ ४९७ ॥
सानुगं स्वयमायातं जित्वा वैश्रवणं रणे ।
मणिमन्तं च तन्मित्रं हत्वा नक्तंचरेश्वरम् ॥ ४९८ ॥
द्रौपद्यै कनकाब्जानि दत्त्वा पवननन्दनः ।
मायाप्रच्छन्नमवधीद्यातुधानं जटासुरम् ॥ ४९९ ॥
अथ शक्ररथारूढः पार्थः पूर्णमनोरथः ।
आयातः पञ्चभिर्वर्षैः प्रणनाम युधिष्ठिरम् ॥ ५०० ॥
हतान्न्यवेदयत्सोऽस्मै हिरण्यपुरवासिनः ।
निवातकवचान्दैत्यान्स्वशौर्याख्यानलज्जितः ॥ ५०१ ॥
वने महानजगरः कदाचिदचलोपमः ।
बद्ध्वा भुजयुगे भीमं चक्रे निश्चेष्टविग्रहम् ॥ ५०२ ॥
संरुद्धभुजनिःस्पन्दभ्रातृदर्शनदुःखितम् ।
उवाचाजगरः प्रश्नं दारयेति युधिष्ठिरम् ॥ ५०३ ॥
को विप्रः किं च वेद्यं स्याद्ब्रूहि भीमस्य मुक्तये ।
भुजगेनेत्यभिहिते तं जगाद युधिष्ठिरः ॥ ५०४ ॥
क्षमा सत्यं शान्तिस्तरुणकरुणं यस्य च मनः
　स शूद्रो विप्रत्वं प्रगुणगुणसङ्गेन भजते ।
द्विजोऽपि व्यर्थात्मा[1] गुणविरहितः शूद्रसदृशः
　कृतैः कण्ठे विप्रस्त्रिगुणगुणसूत्रैर्न भवति ॥ ५०५ ॥
सुखेन दुःखेन च वर्जितं यत्तदेव वेद्यं विदितात्मधाम ।
शीतोष्णहीनप्रतिमैव यत्र संतोषविश्राममयी प्रशान्तिः ॥ ५०६ ॥
धर्मजेनेत्यभिहिते मुक्त्वा[2] भीमं भुजंगमः ।
अगस्त्यादिष्टशापान्तो नहुषस्त्रिदिवं ययुः ॥ ५०७ ॥
अथ पाण्डुसुतान्द्रष्टुं सहितः सत्यभामया ।
मार्कण्डेयादिभिः सार्धं मुनिभिः शौरिराययौ ॥ ५०८ ॥

---

१. 'द्विजोऽपि व्यक्तात्मा' ख-ग; 'द्विजोऽप्यव्यक्तात्मा' घ. २. 'त्यक्त्वा' क-ग.

नानाकथामृताख्यानैः स्थिते तत्राच्युते चिरम् ।
सत्यभामावदत्कृष्णामेकान्ते कृष्णवल्लभा ॥ १०९ ॥
वश्यास्ते पतयः कृष्णे केनाराधनकर्मणा ।
कैर्द्रव्यमन्त्रसूत्राज्ञातिलकाञ्जनलेपनैः ॥ ११० ॥
ममोपदिश जानासि यत्किंचित्प्रीतिकारणम् ।
इत्युक्ते कृष्णकामिन्या श्रुत्वा कृष्णा जगाद ताम् ॥ १११ ॥
अयुक्तमुक्तं सुभगे भवत्या धर्मवर्जितम् ।
वश्यदोषक्रिया स्त्रीणां भर्तृद्रोहाद्रिपातकम् ॥ ११२ ॥
वश्यप्रयोगैर्योषिद्भिः कुष्ठापस्माररोगिणः ।
भग्नभाग्याश्च पतयो मूकान्धबधिराः कृताः ॥ ११३ ॥
भक्तिश्चित्तग्रहः शीलं सतीनां भर्तृभेषजम् ।
इत्युक्ते लज्जया भेजे सत्यभामा निलीनताम् ॥ ११४ ॥
यातेऽथ द्वारकां कृष्णे घोषयात्रापदेशवान् ।
पाण्डवानाययौ द्रष्टुं श्रीभ्रष्टान्धृतराष्ट्रजः ॥ ११५ ॥
वने विहारिणस्तस्य तुल्यावरणकारणे ।
रणे बभूव संमर्दो गन्धर्वैः सैन्यदारणः ॥ ११६ ॥
भग्नेषु कर्णमुख्येषु सानुजं कौरवेश्वरम् ।
बबन्ध गन्धर्वपतिश्चित्रसेनः शरार्दितम् ॥ ११७ ॥
बद्धं सुयोधनं बन्धुधिया राजा युधिष्ठिरः ।
भीमपार्थौ विसृज्याजौ म्लानमानममोचयत् ॥ ११८ ॥
अपि विस्मृतवैरेषु प्राणदानोपकारिषु ।
द्वेषदोषं न तत्याज पाण्डवेषु सुयोधनः ॥ ११९ ॥
दृष्ट्वा चन्द्रं सकलजनतालोचनानन्दहेतुं[1]
सद्यो वक्रद्युतिरलसतामेति पद्माकरस्य ।
नान्तःस्यूता[2] चलति[3] रिपुता किं च संकोचभाजः
प्रायेणैते स्वजनविमुखाः श्रीमदान्धा भवन्ति ॥ १२० ॥

---

१. 'बन्धुं' क-ग. २. 'स्फीता' क-घ. ३. 'चराति' क-ग.

तेन तीव्रावमानेन राज्यत्यागनिबद्धधीः ।
स समाश्वासितोऽभ्येत्य दैत्यैः पातालवासिभिः ॥ ९२१ ॥
अत्रान्तरे पाण्डवेषु यातेषु मृगयारसात् ।
आययौ वैनयात्रायां सिन्धुराजो जयद्रथः ॥ ९२२ ॥
स कृष्णामाश्रमे दृष्ट्वा सीतामिव दशाननः ।
जहार हारितमतिः करुणाक्रन्दिनीं बलात् ॥ ९२३ ॥
ततः प्रत्यागता दृष्ट्वा पाण्डवाः शून्यमाश्रमम् ।
ध्वजिनीं च रजोग्रस्तगगनां समुपाद्रवन् ॥ ९२४ ॥
शराशनिविनिष्पिष्टसैन्यानालोक्य पाण्डवान् ।
रथाज्जयद्रथः कृष्णां तत्याज ज्वलितामिव ॥ ९२५ ॥
अभिसृत्याथ भीमेन गृहीतं वधकम्पितम् ।
ररक्ष सिन्धुनृपतिं शरणाप्तं युधिष्ठिरः ॥ ९२६ ॥
पादेनालोडितं ग्र(स्र)स्तमुकुटं तस्य मारुतिः ।
क्षुरप्रेण प्रलपतश्चक्रे पञ्चसटं शिरः ॥ ९२७ ॥
रुद्रमाराध्य तपसा सैन्धवः फाल्गुनं विना ।
वरमेकदिनं प्राप पाण्डवावरणं रणे ॥ ९२८ ॥
अत्रान्तरेऽर्जुनस्नेहात्कर्णमेत्य शतक्रतुः ।
ययाचे कवचं दिव्यं कुण्डले च शशिप्रभे ॥ ९२९ ॥
पित्रापि वारितोऽर्केण तस्मै वर्म सकुण्डलम् ।
एकवीरवधायास्मै शक्तिं वैकर्तनो ददौ ॥ ९३० ॥

शूरा भवन्ति विदुषामपि नास्ति संख्या
पूर्णं वनं व्रततरैर्विरलस्तु दाता ।
म्लानिं प्रयाति सितसत्त्वमयस्य यस्य
देहप्रदानसमयेऽपि न चित्तवृत्तिः ॥ ९३१ ॥

अरणीं हरिणेनाथ ब्राह्मणस्य हृतां वने ।
जवेन जग्मुराहर्तुं धन्विनः पाण्डुनन्दनाः ॥ ९३२ ॥

---

१. 'अपमानामितो' क-घ. २. 'वर' ख-ग. ३. 'फाल्गुणं' ख-ग. ४. 'वधायात्त' क-घ.

निर्जलारण्यतापार्तैरन्वेष्टुमथ तैः पयः ।
माद्रीसुतः प्रेषितोऽग्रे ददर्श विपुलं सरः ॥ १३३ ॥
प्रश्नमुक्तिकृता पेयमन्यथा नेति खाद्वचः ।
श्रुत्वापि पाण्डवः पीत्वा तोयं तत्याज जीवितम् ॥ १३४ ॥
क्रमान्माद्रीसुते पार्थे भीमे च प्रच्युते तटे ।
युधिष्ठिरः प्रश्नगिरं बभञ्ज गगनेरिताम् ॥ १३५ ॥
निर्जीवः कः स जीवोऽपि योऽश्नात्येकोऽथिवर्जितः ।
खक्ष्माधिकौ कौ पितरौ किं लोलमनिलान्मनः ॥ १३६ ॥
किमनन्तं नृणां चिन्ता धनं किमधिकं श्रुतम् ।
लाभात्किमुत्तमं स्वास्थ्यं किं सुखं चित्तनिर्वृतिः ॥ १३७ ॥
संधिः स्थिरः कैः सुजनैः किं शोककृदहंकृतिः ।
किमैश्वर्यमलुब्धत्वं किं निःशल्यमकोपता ॥ १३८ ॥
किं विषं याचनं श्राद्धकालः कः श्रोत्रियागमः ।
उच्यते पुरुषः कश्च भुवनव्यापि यद्यशः ॥ १३९ ॥
इति प्रश्नोत्तरैस्तुष्टः पिता धर्मः क्षमापतेः ।
जीवयित्वानुजान्गुप्तिमज्ञातसमये व्यधात् ॥ १४० ॥

अथ वनसमयान्ते गूढवासप्रवृत्ताः
प्रययुरजिनखिन्नाः पाण्डवा मत्स्यदेशम् ।
प्रगुणगुणगणानामापदो दैवदिष्टाः
सुरपतिसदृशानामप्यहो दुर्निवाराः ॥ १४१ ॥

अथाभून्मत्स्यराजस्य राजराजशिरोमणेः ।
विराटस्य सभास्तारः कङ्कनामा युधिष्ठिरः ॥ १४२ ॥
सूदस्तस्याभवद्भीमः क्षमापतेर्वल्लभाभिधः ।
गायत्यलिकुलैः कीर्तिं लोला यस्यालकाञ्जिनी ॥ १४३ ॥
श्रीकण्ठशर्वराकुण्ठकण्ठक्रमणकर्मठः ।
शैण्ठाकृतिरभूज्जिष्णुर्नृत्तवृत्तिर्बृहन्नडः ॥ १४४ ॥

१. 'सलिलात्' ख-ग. २. 'षण्ठाकृति' ख-ग.

मत्स्यपत्न्याः सुदोष्णायाः[1] कृष्णा सैरिन्ध्रिकाभवत् ।
अभूतामश्विपुत्रौ च यमौ गोतुरगाधिपौ ॥ ९४५ ॥
इति ते तुरगाधीशसेव्याः सेवकतां ययुः ।
विश्वासः श्रीविलासेषु कस्यान्यस्य भविष्यति ॥ ९४६ ॥
अथायातं हतानेकमल्लं भूमिपतेः पुरः ।
मल्लं जीमूतनामानं मारुतिः क्रीडयावधीत्[2] ॥ ९४७ ॥
सुदोष्णायाः प्रियो भ्राता कदाचिदथ कीचकः ।
विलोक्यान्तःपुरे कृष्णामभवत्काममोहितः ॥ ९४८ ॥
व्याजेन प्रेषितां स्वस्त्रा भयसंभ्रमविद्रुताम् ।
कीचकस्तामभिद्रुत्य चकर्ष चरणाहताम् ॥ ९४९ ॥
सा सभामेत्य भूभर्तुरग्रे प्राह पराभवम् ।
राजापि कीचकस्नेहाच्चक्रे गजनिमीलितम्[3] ॥ ९५० ॥
आर्ताक्रन्दश्रवणबधिराः सेवकालोकनान्धाः
प्रत्यालापप्रणयिनि जने निश्चलोत्सेकमूकाः ।
भूपाः प्रायः पिशुनवचनाकर्णने हस्तिकर्णा
नीचप्रीतिप्रसृतनयनाश्चञ्चलानेकवाचः ॥ ९५१ ॥
भीमं महानसे सुप्तं सा प्रबोध्य तमभ्यधात् ।
बाष्पैः करतलस्पृष्टे क्षालयन्तीव वाससी ॥ ९५२ ॥
क्रुद्धेन तेन निर्दिष्टां सा समादाय संविदम् ।
कीचकस्याकरोत्प्रातः संकेतं नाट्यवेश्मनि ॥ ९५३ ॥
रात्रौ पूर्वप्रविष्टोऽथ भीमः कीचकमागतम् ।
केसरीव द्विपं मत्तमवधीन्मूढकामुकम् ॥ ९५४ ॥
पतयो मम गन्धर्वाः कृष्णयेत्युदितं पुरा ।
तैरेव निहतं मेने प्रभाते कीचकं जनः ॥ ९५५ ॥

---

१. भारते सुदेष्णेति नामास्ति. २. अस्मदीयं घ-पुस्तकं 'क्री' इति पर्यन्तं वर्तते. ३. निमीलनम्' ख-ग.

तस्य भ्रातृशतं देहसंस्काराय समुद्यतम् ।
कृष्णां चितानले क्षेप्तुमनयद्दुःखदायिनीम् ॥ ९५६ ॥
भीमस्तत्करुणाक्रन्दमाकर्ण्य क्रूरकोपवान् ।
शतं वृक्षप्रहारेण कीचकानामपातयत् ॥ ९५७ ॥
प्रेरितः कौरवेन्द्रोऽथ त्रैगर्तेन सुशर्मणा ।
हर्तुं कीचकहीनस्य विराटस्यापयौ धनम् ॥ ९५८ ॥
संरुद्धे नगरे मत्स्यः पूर्वमेव सुशर्मणा ।
कङ्कवल्लभगोवाजिपतिभिः सह निर्ययौ ॥ ९५९ ॥
ततः प्रवृत्ते समरे मिथः सुभटसंक्षये ।
जवाद्विराटमहरत्सुशर्मा शरवर्षिणम् ॥ ९६० ॥
भीमोऽभिसृत्य निष्पिष्टरथस्यास्य सुशर्मणः ।
पादेन मौलिमुन्मथ्य मत्स्यराजममोचयत् ॥ ९६१ ॥
त्रिगर्तकटके भग्ने सामात्यः कौरवेश्वरः ।
विराटगोधनं सर्वं जहारान्येन वर्त्मना ॥ ९६२ ॥
शूरशून्येऽथ नगरे विराटसुतमुत्तरम् ।
अभ्येत्य जगदुर्गोपाः कौरवैर्गोधनं हृतम् ॥ ९६३ ॥
सोऽब्रवीच्चौरचरितं कौरवं हन्म्यहं रणे ।
गुप्तं भीष्मकृपद्रोणकर्णमुख्यैर्महारथैः ॥ ९६४ ॥
किं तु मे सारथिर्नास्ति रणभारभरक्षमः ।
इत्युक्ते राजपुत्रेण द्रौपदी तमभाषत ॥ ९६५ ॥
उत्तरायाः स्वसुर्यस्ते नृत्ताचार्यो बृहन्नडः ।
स सारथिरभूत्पूर्वं खाण्डवे सव्यसाचिनः ॥ ९६६ ॥
अथोत्तरार्थितः पार्थः प्रतिपन्नरथग्रहः ।
चकार कवचाबन्धवैपरीत्यैर्जनस्मितम् ॥ ९६७ ॥
अथोत्तरे रथारूढे जवेनाश्वानचोदयत् ।
क्रीडायै कुरु वस्त्राणि जिष्णुरुत्तरयार्थितः ॥ ९६८ ॥

दृष्ट्वोत्तरः कौरवेन्द्रसैन्यं शस्त्रजलार्णवम् ।
निवर्तस्वेति भीभग्नस्त्राणार्थी पार्थमभ्यधात् ॥ १६९ ॥
तमर्जुनोऽवदन्निन्द्यं क्षत्रियस्य पलायनम् ।
एकवारक्षये काये मरणं न पुनः पुनः ॥ १७० ॥
श्रुत्वैतत्कातरतया रथमुत्सृज्य विद्रुतम् ।
आनिनायोत्तरं केशैः पश्चादाकृष्य फाल्गुनः ॥ १७१ ॥
योत्स्येऽहं कुरुभिर्धैर्यं भजस्व भव सारथिः ।
अर्जुनोऽहं भवद्गेहे कङ्काद्याः पाण्डवाः स्थिताः ॥ १७२ ॥
श्मशानान्तः शमीवृक्षस्कन्धे सन्त्यायुधानि नः ।
प्रयच्छ मम गाण्डीवमित्युवाच तमर्जुनः ॥ १७३ ॥
उत्तराहृतमादाय धनुरास्फाल्य पाण्डवः ।
तत्प्रेरितरथस्तूर्णं विवेश कुरुवाहिनीम् ॥ १७४ ॥
एकैकशः समस्तांश्च शराशनिघनागमः ।
भीष्मकर्णकृपद्रोणमुख्यानजयदर्जुनः ॥ १७५ ॥
प्रस्वापनास्त्रसुप्तानां कुरूणामुत्तराकृते ।
जहार जिष्णुर्वासांसि यशांसीवाभिमानिनाम् ॥ १७६ ॥
प्रत्याहृते गोधनेऽथ विजयेन जितारिणा ।
चक्रे विराटः पुत्रस्य सभायां विक्रमस्तुतिम् ॥ १७७ ॥
बृहन्नडप्रभावेण पुत्रस्ते विजयोर्जितः ।
वदन्निति विराटेन प्रहतोऽक्षैर्युधिष्ठिरः ॥ १७८ ॥
हेमपात्रे धृते रक्ते द्रौपद्या चक्रवर्तिनः ।
प्रविवेशार्चितः पौरैरवाप्तोन्नतिरुत्तरः ॥ १७९ ॥
अक्षाभिघातरक्ताक्तललाटं वीक्ष्य धर्मजम् ।
स प्रसाद्य प्रयत्नेन निनिन्द कुकृतं पितुः ॥ १८० ॥
अज्ञातवाससमये पूर्णे पाण्डुसुतानथ ।
हृष्टः प्रकटतां यातान्विराटः समपूजयत् ॥ १८१ ॥

तेषामभ्युदयं ज्ञात्वा प्राप्तेष्वखिलबन्धुषु ।
विराटस्तनयां प्रादादुत्तरामभिमन्यवे ॥ ९८२ ॥
ते कृष्णसात्यकिहलायुधकुन्तिभोज-
पाञ्चालशैब्यमगधेशशिखण्डिमुख्यैः ।
सार्धं सभाभुवमुपेत्य विराटजुष्टां
प्रापुः श्रियं कनकविष्टरसंनिविष्टाः ॥ ९८३ ॥
अखण्डितान्पाण्डुसुतान्विज्ञाय कुरुभूपतिः ।
अलङ्घ्यशासनं दैवं मेने दलितपौरुषम् ॥ ९८४ ॥
तेषामक्षौहिणीः सप्त ज्ञात्वाथ समुपागताः ।
दुर्योधनः प्रविदधे भूपालबलसंग्रहम् ॥ ९८५ ॥
पाण्डवार्थे समायातं पथि संमानभोजनैः ।
आराध्य तुष्टमहरत्स शल्यं मद्रभूपतिम् ॥ ९८६ ॥
द्वारकायां ततः कृष्णं सुयोधनधनंजयौ ।
तुल्यमभ्येत्य साहाय्यं ययाचाते रणोद्यमे ॥ ९८७ ॥
अक्षौहिण्या परिवृतं कृतवर्माणमच्युतः ।
दत्त्वा कुरुपतेर्भागमयोद्धा पाण्डवान्ययौ ॥ ९८८ ॥
वृतः सौबलहार्दिक्यभगदत्तजयद्रथैः ।
एकादशाक्षौहिणीभिः कौरवः प्रमदं ययौ ॥ ९८९ ॥
अत्रान्तरे रणारम्भसंशयाकुलिताशयम् ।
धृतराष्ट्रं समभ्येत्य प्रणम्योवाच संजयः ॥ ९९० ॥
अराज्यदानसंधानदूतोऽहं तव शासनात् ।
गतः पाण्डुसुतान्द्रष्टुं लोभाभ्यासेन लज्जितः ॥ ९९१ ॥
मयोक्तं भवतोक्तं यत्प्रत्युक्तं यत्तु पाण्डवैः ।
देव वक्तास्मि तत्प्रातः सभायां भूभुजां पुरः ॥ ९९२ ॥
इत्युक्त्वा संजये याते धृतराष्ट्रः स्वदुर्नयात् ।
तद्वाक्यशङ्काकुलितः प्राप निद्रादरिद्रताम् ॥ ९९३ ॥

१. 'संमान्य' क.

प्रजागरगदास्वस्थं द्वाःस्थाहूतः सुखोज्झितम् ।
तमेत्य विदुरः प्राह संजयोक्तामसंशयम् ॥ ५९४ ॥
अयं ते सुमते कस्मान्निद्राद्रोही महाज्वरः ।
तापं नायान्ति निष्कामा निर्लोभा निर्भया अपि ॥ ५९५ ॥
त्यक्ताभिमानः संतोषी निर्द्वेषः शीलवान्क्षमी ।
दुःखैकसारे संसारे पञ्चैते सुखनिर्वृताः ॥ ५९६ ॥
लोभाभ्यासव्यसनमसमं चिन्तया हन्ति निद्रां
स्वस्थः शेते प्रसृतचरणः किं तु निर्लोभ एव ।
लोभः पुंसामसमविषमः कृष्णवर्त्मा विधत्ते
तीव्रं तापं जनधनघनस्नेहसंपूर्यमाणः ॥ ५९७ ॥
असेवाप्ता वृत्तिः खलपरिभवायासरहिता
वचः सत्यस्नातं परगुणगणोदीरणपरम् ।
अनुत्तानः पाणिः परधनकणस्पर्शविमुखः
प्रकृत्या निर्वैरं हृदयममलं यस्य स सुखी ॥ ५९८ ॥
राज्यार्धं भ्रातृपुत्रेभ्यः प्रयच्छ त्यज लुब्धताम् ।
बन्धुवैररजोदिग्धं प्रक्षालय धिया मनः ॥ ५९९ ॥
त्यजैकं कुमतिं पुत्रं संरक्ष सकलं कुलम् ।
गोनासदष्टमेकाङ्गं त्यज्यते जीविताप्तये ॥ ६०० ॥
विदुरेणेत्यभिहिते धृतराष्ट्रस्तमब्रवीत् ।
युक्तमुक्तं त्वया किं तु त्यक्तुं शक्नोमि नात्मजम् ॥ ६०१ ॥
हेलास्थलीकृताम्भोधिस्तृणीकृतहिमाचलः ।
स्वातन्त्र्यचित्रचरितः केन वा लङ्घ्यते विधिः ॥ ६०२ ॥
श्रुतं न मृत्युरस्तीति मया किल वचः पुरा ।
तद्ब्रूहीति क्षितीशेन पृष्टस्तं विदुरोऽवदत् ॥ ॥ ६०३ ॥
स्वयं वक्तुं न युक्तं मे राजन्नुपनिषत्पदम् ।
सनत्सुजातो योगीन्द्रः सर्वं ते कथयिष्यति ॥ ६०४ ॥

१. 'गरास्वस्थं' क. २. 'निर्दोषः' क. ३. 'च' क. ४. 'तीव्रः' क. ५. 'गोनसा' क-ख.

अभिधायेति विदुरस्तं सस्मार स चाययौ ।
प्राप्तपूजासनः पृष्टः क्ष्माभुजेति[1] तमभ्यधात् ॥ ६०५ ॥
राजन्देहभृतां मृत्युः क्रोधः स्ववेदनोदितः[2] ।
येनाहतश्च हन्ता च मर्मदाहेन शोचितः ॥ ६०६ ॥
रागद्वेषादयो दोषा जनानां जन्मकारणम् ।
जन्मैव मृत्युः संसारे नास्ति मृत्युरजन्मनाम् ॥ ६०७ ॥
न मुक्तिर्वेदवादेन देहान्ते स पलायते ।
वीणावंशेषु भग्नेषु न क्वचित्तिष्ठते ध्वनिः ॥ ६०८ ॥
आत्मप्रत्यवमर्षेण पुनर्जन्म न विद्यते ।
आत्मप्रकाशं पश्यन्ति योगिनस्तं सनातनम् ॥ ६०९ ॥
इत्युक्त्वान्तर्हिते तस्मिन्योगीन्द्रे तेजसां निधौ ।
राजा राजसभां प्रातर्भेजे भीष्मादिभिः सह ॥ ६१० ॥
आहूतः संजयस्तत्र पाण्डवोक्तिं न्यवेदयत् ।
श्रूयतामविरुद्धैर्वा क्रुद्धैर्वा तैरुदाहृतम् ॥ ६११ ॥

स्वं राज्यं प्रददाति यद्यवनिपस्तत्किं हतैर्बान्धवै-
र्द्यूते किं तु कृतां न विस्मरति तां भीमः प्रतिज्ञां निजाम् ।
पाणिः किं च पितृव्यपादविनतौ चापे च धावत्ययं[3]
तुल्यं चित्तममन्युमन्युशबलं संधौ च युद्धे च नः ॥ ६१२ ॥

श्रुत्वैतद्धृतराष्ट्रेण तनयक्षयभीरुणा ।
भीष्माद्यैश्चार्थितः संधिं बुबुधे न सुयोधनः ॥ ६१३ ॥
अत्रान्तरे लोकगुरुर्लोकप्रत्यायनोद्यतः ।
संध्यर्थी कौरवान्कृष्णः स्वयमेव समाययौ ॥ ६१४ ॥
भक्त्या पुरः[4] समायातैर्भीष्मद्रोणकृपादिभिः ।
सहितः स विवेशाथ धृतराष्ट्रस्य मन्दिरम् ॥ ६१५ ॥
हृष्टेन पूजितस्तेन प्रणयेन निमन्त्रितः ।
स्नेहे विपदि वा भोक्तुं युक्तमित्याह केशवः ॥ ६१६ ॥

१. 'क्ष्माभुजा च' ख-ग. २. 'वचनो' क. ३. 'अलं' ख-ग. ४. 'पुरा' ख.

विदुरस्य गृहे भुक्त्वा नीत्वा तत्कथया क्षपाम् ।
प्रभाते राजभिर्जुष्टां प्रविवेश सभां हरिः ॥ ६१७ ॥
हेमासनोपविष्टेऽथ सामात्ये कौरवेश्वरे ।
भेजे रत्नासनं शौरिः सहायातैर्महर्षिभिः ॥ ६१८ ॥
अथ प्रथमजीमूतश्यामः[1] सामसुधामयीम् ।
उज्जगार गिरं स्निग्धगम्भीरां गरुडध्वजः ॥ ६१९ ॥
कौरवेन्द्र स्वपुत्रास्ते भ्रातृपुत्रास्तु[2] पाण्डवाः ।
सदृशाः किं त्वया तेषां भेदात्कलिरुपेक्षितः ॥ ६२० ॥
भवान्विद्यासिन्धुस्तव सुमतिदाता च विदुरः
　प्रणेता भीष्मोऽयं गुरुरपि भरद्वाजतनयः ।
अहो तत्राप्येषा प्रभवति मतिर्दुर्नयमयी
　न विद्मः कस्यायं कुकृतपरिपाकस्य विभवः ॥ ६२१ ॥
कलङ्कं या दत्ते प्रसरदपवादास्पदतया
　सुहृद्भिर्नैराश्यात्कृतमुखविकारैः परिहृता ।
अभोग्या बन्धूनां कृशविवशभृत्यार्थिविफला
　सशापा सा संपद्विपदिव जनोद्वेगजननी ॥ ६२२ ॥
यद्वृत्तं खलकेलिकैतवकलिक्लेशेन कालुष्यकृ-
　च्चित्ते तत्किल संकलय्य सकलं लोकक्षयाशङ्किभिः ।
संधिर्वैररजोविरामविमलैरभ्यर्थ्यते पाण्डवै-
　र्ग्रामैः किं च कुशस्थलप्रभृतिभिः प्रीत्यार्पितैः पञ्चभिः॥६२३॥
कौस्तुभाभरणेनेति भरतान्वयभूतये ।
सभ्यानां भीष्ममुख्यानां भाषितेऽभिमते सताम् ॥ ६२४ ॥
प्रबोधितोऽपि मुनिभिः कण्वभार्गवनारदैः[3] ।
मदनिद्रालसः प्राह संधिद्वेषी सुयोधनः ॥ ६२५ ॥
मया सूच्यग्रमात्रापि न त्याज्या पाण्डवेषु भूः ।
किं मिथ्यानीतिचिन्ताभिर्दैवाधीना विभूतयः ॥ ६२६ ॥

१. 'श्यामः' क. २. 'भ्रातुः पुत्राश्च' क. ३. 'नारदभार्गवैः' क.

भवति भिषगुपायैः पथ्यभुङ्नित्यरोगी
धनधरणविनिद्रश्छिद्रगोप्ता दरिद्रः ।
अनयचयविधायी निश्चलैश्वर्यधैर्यः
स्ववशनियतशक्तेः शासनेनैव धातुः ॥ ६२७ ॥
इत्युक्त्वोत्थाय दर्पान्धः कर्णेन सह कौरवः ।
सभान्तराद्विनिर्गत्य बन्धं शौरेरचिन्तयत् ॥ ६२८ ॥
सह स्थितेन कथितं कर्णे सात्यकिना हरिः ।
ज्ञात्वा तन्मतमापेदे विश्वात्मा विश्वरूपताम् ॥ ६२९ ॥
विश्वाकारव्यतिकरलसद्ब्रह्मरुद्रेन्द्रचन्द्रै-
र्व्याप्तः सर्वैः सुरमुनिगणैः सिद्धगन्धर्वसाध्यैः ।
निष्पर्यन्ताकृतिकृतजगद्गौरवः कौरवाणां
निद्रामुद्रामदिशदशिवामच्युतः प्रच्युतानाम् ॥ ६३० ॥
विना भीष्मं सविदुरं मोहलीनेषु राजसु ।
सभामुत्सृज्य भगवान्प्रतस्थे गरुडध्वजः ॥ ६३१ ॥
पश्चात्कर्णमथायातमारोप्य स्वरथे हरिः ।
प्रेम्णा प्राहार्कतनयं कौन्तेयस्त्वं न सूतजः ॥ ६३२ ॥
सहोदरान्पाण्डुसुतान्भजस्व त्यज कौरवान् ।
राज्यं तव क्रमायातं कुरु मद्वचनं हितम् ॥ ६३३ ॥
इत्युक्तं शौरिणा श्रुत्वा कर्णस्तं प्रत्यभाषत ।
सर्वं वेद्मि न निन्द्यं तु मित्रद्रोहमहं सहे ॥ ६३४ ॥
देव त्वमेव वद कौरवभूमिभर्तु-
रुत्सङ्गसक्तशिरसः कथमर्कजोऽहम् ।
व्यापारयामि सुहृदः परिपीय लक्ष्मीं
कण्ठे शठः कठिनधारमकुण्ठशस्त्रम् ॥ ६३५ ॥
साम्राज्यं निहतारातिरवाप्स्यति युधिष्ठिरः ।
स दृष्टः श्वेतवाहस्थः स्वप्ने पायसभुग्मया ॥ ६३६ ॥

१. 'निशित' क. २. 'शैलस्थः' ख-ग.

दृष्टाश्च कौरवाः सर्वे तैलाक्ताः खरवाहनाः।
रक्तमाल्याम्बरोष्णीषा व्रजन्तो दक्षिणां दिशम् ॥ ६३७ ॥
इति वैकर्तनेनोक्तं[1] विचिन्त्योचितमच्युतः।
तं विसृज्य समामन्त्र्य प्रययौ पाण्डवान्तिकम् ॥ ६३८ ॥
प्रातः कुन्ती समभ्येत्य कर्णं सूर्यार्चनोन्मुखम्।
मुक्तमौनं तदेवाह नामन्यत स चाचलः ॥ ६३९ ॥
उवाच च विना जिष्णुं न[2] हन्म्यन्यं तवात्मजम्।
मयि तेन मया तस्मिन्हते त्वं पञ्चपुत्रिका[3] ॥ ६४० ॥
श्रुत्वैतत्प्रययौ कुन्ती भग्नार्थितमनोरथा।
ससैन्याश्च कुरुक्षेत्रमाजग्मुः कुरुपाण्डवाः ॥ ६४१ ॥
बलद्वये कुरुक्षेत्रे संनिविष्टे सुयोधनः।
भीष्मं सेनापतिं चक्रे धृष्टद्युम्नं युधिष्ठिरः ॥ ६४२ ॥
रथसंख्याक्षणे कर्णं भीष्मोऽर्धरथमभ्यधात्[4]।
तद्युद्धावधि युद्धं च कोपात्तत्याज सूतजः ॥ ६४३ ॥
ततः सुयोधनं भीष्मः प्राहोत्साहाहवोन्मुखः।
योद्धाहं त्वद्विपक्षाणामेकं मुक्त्वा शिखण्डिनम् ॥ ६४४ ॥
काशिराजसुताः पूर्वं बलात्कन्याः स्वयंवरे।
अम्बाम्बिकाम्बालिका च भ्रातुरर्थे समाहृताः ॥ ६४५ ॥
साल्वाभिलाषिणी नीता त्वयास्मीत्यार्तवादिनी।
संत्यक्ताम्बा ययौ साल्वं सोऽपि तां नाग्रहीद्धिया ॥ ६४६ ॥
पुनः प्राप्ता मया त्यक्ता भग्नमानमनोरथा।
सा जगामोभयभ्रंशखिन्ना मुनितपोवनम् ॥ ६४७ ॥
ततस्तद्दुःखकारुण्याद्गुरुर्मामेत्य भार्गवः।
अम्बां गृहाणेत्यवदत्प्रत्याख्यातः पुनः पुनः ॥ ६४८ ॥
आज्ञाभङ्गेन कुपितः स मया समरे जितः।
ययौ क्षत्त्रोपदेशात्तनियमः स्वं तपोवनम् ॥ ६४९ ॥

१ 'उक्तो' ख-ग. २. 'नाहं हन्मि' ख-ग. ३. 'पुत्रपञ्चका' क. ४. 'अब्रवीत्' ख-ग.

मन्मन्युत्यक्तदेहाम्बा जाता मत्क्षयकाङ्क्षिणी ।
कन्या पाञ्चालराजस्य द्रुपदस्य शिखण्डिनी ॥ ६९० ॥
प्रख्यापिता पुत्रतया सा पित्रा पुत्रकाङ्क्षिणा ।
लेभे दशार्णराजस्य विवाहविधिना सुताम् ॥ ६९१ ॥
शय्यारूढा दशार्णेशकन्या कन्यां विलोक्य ताम् ।
दूत्या न्यवेदयत्पित्रे स च क्रुद्धः समाययौ ॥ ६९२ ॥
दशार्णरुद्धे नगरे द्रुपदे विद्रवोद्यते ।
खिन्ना शिखण्डिनी रात्रौ प्रययौ शून्यकाननम् ॥ ६९३ ॥
तत्र स्थूणाख्ययक्षेण कृपयैकदिनार्पितम् ।
विधातृशक्तिवैचित्र्यात्सा लेभे लक्ष्म पौरुषम् ॥ ६९४ ॥
दर्शितं द्रुपदेनाथ पुरुषव्यञ्जनं सुतम् ।
दृष्ट्वा विमन्युर्दाशार्णः स्वां ययौ लज्जितः पुरीम् ॥ ६९५ ॥
वनं वैश्रवणः प्राप्तस्तं समीपमनागतम् ।
स्थिरस्त्रीलक्षणं यक्षं शापेन विदधे क्रुधा ॥ ६९६ ॥
अगृहीतेऽथ यक्षेण स्वलक्ष्मणि शिखण्डिनी ।
पुरुषत्वं गता वर्ज्यः स्त्रीपूर्वः स मया युधि ॥ ६९७ ॥
न संत्रस्ते न निःशस्त्रे नान्यविद्धे न विद्रुते ।
न स्त्रीपूर्वे न साक्रन्दे निपतन्ति ममेषवः ॥ ६९८ ॥

उक्त्वेति दिव्यतटिनीतनयस्तरस्वी
वृद्धोऽपि शौर्यतरुणस्तरणिप्रतापः ।
प्रम्लानतां परबले निजकार्मुके ज्यां
चित्ते च कौरवपतेर्धृतिमाबबन्ध ॥ ६९९ ॥

दिव्यं युद्धेक्षणं चक्षुः कृष्णद्वैपायनार्पितम् ।
अग्रहीतमथ प्राप धृतराष्ट्रेण संजयः ॥ ६६० ॥
कुरुपाण्डवसङ्ग्रामं कुरुक्षेत्रे विलोक्य सः ।
धृतराष्ट्राय निखिलं दिव्यचक्षुर्न्यवेदयत् ॥ ६६१ ॥

---

१. 'देहा सा' ख-ग. २. 'विच्युते' क. ३. 'अपि' क.

अथ युद्धाय संनद्धे भूमिपालबलद्वये ।
गुरून्भीष्मकृपद्रोणमुखान्संबन्धिबान्धवान् ॥ ६६२ ॥
दृष्ट्वा युद्धोद्यतानग्रे श्वेताश्वः कृष्णसारथिः ।
मुमोह करुणाक्रान्तः प्रशान्तसमरोद्यमः ॥ ६६३ ॥
तं समाश्वास्य शोकार्तं जगाद गरुडध्वजः ।
त्रिजगत्सर्गसंहारक्रीडापरिचितोऽच्युतः ॥ ६६४ ॥
मनुष्यजन्मजनिता केयं ते मोहवासना ।
क्षयं यदक्षयस्यापि शङ्कसे परमात्मनः ॥ ६६५ ॥
स्फटिकस्येव कुरुते रागयोगाच्चिदात्मनः ।
मिथ्याकलङ्ककलनां कायाहंकारसंकरः ॥ ६६६ ॥
मेघव्योमसमागमप्रतिनिधिर्धूमाग्निसङ्गोपमः
श्लेषः कायचिदात्मनोः प्रकुरुते भिन्नोऽप्यभिन्नक्रमम् ।
छिन्नेच्छाघनमूलनिष्फलतया नित्यप्रवृत्तक्रियैः
संमोहः स्वपरावभेदरहितैर्युक्तैः स संत्यज्यते ॥ ६६७ ॥
इत्युक्त्वा प्रत्ययोत्पत्त्यै विश्वव्याप्तिनिदर्शनम् ।
अर्जुनस्योर्जितं विष्णुर्विश्वरूपमदर्शयत् ॥ ६६८ ॥
तत्सर्वदेवमयमद्भुतमच्युतस्य
रूपं सहस्रकरकोटिनिभं बभासे ।
निःशेषभूपतितरङ्गितसैन्यसिन्धु-
ग्रासाभिलाषवडवानलतुल्यवक्त्रम् ॥ ६६९ ॥
वचः श्रुत्वा वपुर्दृष्ट्वा दिव्यं मोहहरं हरेः ।
निर्विकल्पमतिर्जिष्णुः सङ्ग्रामाभिमुखोऽभवत् ॥ ६७० ॥
रथाग्रादवरुह्याथ रणारम्भे युधिष्ठिरः ।
प्रणनाम प्रसादार्द्रान्भीष्मद्रोणमुखान्गुरून् ॥ ६७१ ॥
ते तमूचुर्गुणोदारं विधाय विजयाशिषम् ।
परं लज्जामहे राजन्प्रयातास्त्वद्विपक्षताम् ॥ ६७२ ॥

---

१. 'युद्धोद्धतान्' क. २. 'प्रवृत्ता क्रिया' ख; 'प्रवृत्ता....' ग.

किं कुर्महे परायत्ता वेतनोत्तानपाणयः।
कौरवस्य परं याताः सेवाकार्पण्यपण्यताम् ॥ ६७३ ॥
अग्रे संकुचिताकृतिर्लघुतया यात्युन्मुखत्वं विभो-
राशापाशनिवेशयन्त्रिततनुः संख्याक्षणे लम्बते।
अल्पेनापि समर्पितेन सुतरां वित्तेन धत्ते रतिं
साकम्पः किल कायविक्रयतुलारूढः सदा सेवकः ॥ ६७४ ॥
इत्युक्त्वा तैर्विसृष्टेऽथ रथारूढे युधिष्ठिरे।
चेरुर्वीरा यशःपुष्पलुब्धा इव शिलीमुखाः ॥ ६७५ ॥
प्रवृत्ते घनसंमर्दे नृत्यत्खड्गशिखण्डिनि।
पेतुर्भूभृत्कुले भीष्मशरधारापरम्पराः ॥ ६७६ ॥
द्वन्द्वसक्तेषु शूरेषु विराटसुतमुत्तरम्।
निनाय समरे शल्यः क्षयारम्भोपहारताम् ॥ ६७७ ॥
नवमे युद्धदिवसे नागीतनयमार्जुनिम्।
इरावन्तं जघानाजौ रक्षःपतिरलम्बुसः ॥ ६७८ ॥
प्रत्यहं युधि भीष्मेण भूभृतामयुते हते।
दशमेऽह्नि क्षयाशङ्का पाण्डवानामजायत ॥ ६७९ ॥
भीष्माभिमुखमाप्तस्य रणे गाण्डीवधन्वनः।
शिखण्डी पुरतस्तस्थौ मेर्घस्येव प्रवार्षिणः ॥ ६८० ॥
स्त्रीपूर्वदर्शनोद्वेगशिथिलीकृतकार्मुकः।
प्राह दुःशासनं भीष्मः किरीटिशरपूरितः ॥ ६८१ ॥
एते ते त्रिपुरारातिकिरातपतनोन्नताः।
शराः खाण्डवशौण्डस्य चण्डा गाण्डीवधन्वनः ॥ ६८२ ॥
एते दुःसहदस्यवः कुरुपतेर्वस्त्रग्रहे गोग्रहे
कोपव्याकुलकालखञ्जजयिनः पौलोमनिर्मूलनाः।
जिष्णोर्लक्ष्यभिदः स्वयंवरमणेः(हे) क्ष्मापालवैलक्ष्यदा
न स्त्रीपूर्वशिखण्डिनस्तनुतृणक्लीबाननाः सायकाः ॥ ६८३ ॥

१ 'मेघस्येवेषु वर्षिणः' ख-ग. २. 'दर्शनोद्योग' ख-ग. ३. 'धन्विनः' ख-ग.

इति ब्रुवन्कौरवेशं शरनिर्विवराकृतिः ।
स पपात रथादस्तशैलादिव दिवाकरः ॥ ६८४ ॥
पितुर्वरेण स्वच्छन्दमृत्युर्योगपरायणः ।
उत्तरायणमाकाङ्क्षन्स जीवितमधारयत् ॥ ६८५ ॥
दिव्यास्त्रभिन्नभूजाततोयाप्यायकृदर्जुनः ।
शिरस्तस्य निराधारमुच्चिक्षेप शरैस्त्रिभिः ॥ ६८६ ॥
कर्णेन प्रणिपातकीर्णचरणः पूरेण बाष्पाम्भसा-
माशापाशविमुक्तिनिश्चलसुखः संसारविस्तारिणम् ।
सस्मार स्मरणीयमन्तसमये संतोषविश्रान्तधीः
शान्तानन्तविकल्पतल्पविमले चित्तेऽच्युतं सोऽच्युतम् ॥६८७॥
अथ भीष्मविहीनस्य धृतिहीनस्य पश्यतः ।
सैन्यस्याधिपतिं चक्रे द्रोणाचार्यं सुयोधनः ॥ ६८८ ॥
प्राप्ताभिषेकः प्रददौ वरं दुर्योधनाय सः ।
युधिष्ठिरं गृहीत्वा ते दास्यामि समरादिति ॥ ६८९ ॥
ततः प्रवृत्ते सङ्ग्रामे प्रथमेऽह्नि नृपक्षयः ।
इतोऽभूद्द्रोणविशिखैर्धृष्टद्युम्नशरैरितः ॥ ६९० ॥
द्वितीये युद्धदिवसे स्मारितः कुरुभूभृता ।
गतेऽर्जुने धर्मसुतं ग्रहीष्यामीति सोऽभ्यधात् ॥ ६९१ ॥
ततः संशप्तकाः शूराः शपथादनिवर्तिनः ।
त्रिगर्ताः समराद्दूरं निन्युराहूय फाल्गुनम् ॥ ६९२ ॥
कौरवैः पाण्डवानीके कुरुसैन्ये च पाण्डवैः ।
त्रिगर्ताब्धौ च पार्थेन दारितेऽभून्नृपक्षयः ॥ ६९३ ॥
सुप्रतीकगजारूढस्ततः प्राग्ज्योतिषेश्वरः ।
मृद्नन्गजरथानीकं पाण्डुसेनां व्यलोकयत् ॥ ६९४ ॥

---

१. 'निराधारं स चिक्षेप' ख-ग. २. 'विस्तारणम्' ख. ३. 'विश्रान्तये' ख.
४. 'जल्प' ख. ५. 'इति' क. ६. 'भूभुजा' क.

श्रुत्वास्य सैन्यसंमर्दं त्वरितः श्वेतवाहनः ।
मुरारिप्रेरितरथः कुञ्जरस्याभवत्पुरः ॥ ६९५ ॥
घोरे प्रवृत्ते समरे किरीटिभगदत्तयोः ।
ऊर्ध्वाधःपातिनामासीत्संघर्षः पत्त्रिणामपि ॥ ६९६ ॥
विश्वक्षयक्षमं क्षिप्तं भगदत्तेन वैष्णवम् ।
जग्राहार्जुनरक्षायै वक्षसास्त्रमधोक्षजः ॥ ६९७ ॥
पार्थास्त्रकृत्ते पतिते भगदत्तेऽथ भूभृति ।
भग्नभूभृत्कुला पृथ्वी चकम्पे कुरुवाहिनी ॥ ६९८ ॥
तृतीये युद्धदिवसे प्रतिज्ञाभङ्गलज्जितः ।
चक्रव्यूहं व्यधात्क्रुद्धः संसारगहनं गुरुः ॥ ६९९ ॥
पार्थे संशप्तकान्याते व्यूहं धर्मसुताज्ञया ।
सौभद्रः केसरिशिशुर्गजयूथमिवाविशत् ॥ ७०० ॥
प्रवेष्टुमुद्यतान्व्यूहमभिमन्युविदारितम् ।
अवारयद्वर्गवरात्पाण्डुपुत्राञ्जयद्रथः ॥ ७०१ ॥
अभिमन्युशरोत्कृत्तशिरसां कङ्कटक्षये ।
भूभृतां वज्रभिन्नानां शृङ्गभङ्ग इवाभवत् ॥ ७०२ ॥
नृपान्कर्णकृपद्रौणिशल्यहार्दिक्यसौबलान् ।
एकैकशः समस्तांश्च स शरैर्विमुखान्व्यधात् ॥ ७०३ ॥
कृत्तचापः स कर्णेन हताश्वः कृतवर्मणा ।
कृपेण हतसूतश्च हतः सर्वैर्महारथैः ॥ ७०४ ॥
हत्वा त्रिगर्तानायातः सव्यसाची दिनक्षये ।
मुमोह तनयं श्रुत्वा हतमेकं महत्तरैः ॥ ७०५ ॥
व्यूहद्वारनिरोद्धारं ज्ञात्वा हेतुं जयद्रथम् ।
अनस्तगे रवौ जिष्णुः प्रतिज्ञां तद्वधे व्यधात् ॥ ७०६ ॥
तत्प्रतिज्ञाभयाद्गन्तुं रात्रौ सैन्धवमुद्यतम् ।
गोप्ता तवाहमित्युक्त्वा दर्पाद्गुरुरवारयत् ॥ ७०७ ॥

१. 'लुब्धः' क. २. 'नृपकर्ण' ख-ग.

स्वप्ने स कृष्णः श्वेताश्वः स्तुत्वा देवं पिनाकिनम् ।
विधिं पाशुपतास्त्रस्य तदादिष्टमवाप्तवान् ॥ ७०८ ॥
प्रभाते शकटव्यूहे सूचीपाशे जयद्रथम् ।
निवेश्य यत्नादाचार्यश्चक्रे दैवजयोद्यमम् ॥ ७०९ ॥
व्यूहद्वारस्थितं द्रोणं प्रणम्याथ धनंजयः ।
कम्पलोलं विवेशाशु सैन्यं वनमिवानलः ॥ ७१० ॥
मनोजवस्य विशतः शरैर्गाण्डीवधन्वनः ।
शिरः संमूह आच्छिन्नः पपात भुवि भूभृताम् ॥ ७११ ॥
दूरं प्रविष्टे श्वेताश्वे शङ्खशब्दमशृण्वता ।
विवेश सात्यकिर्व्यूहं विसृष्टो धर्मसूनुना ॥ ७१२ ॥
तस्य निर्दारितारातेर्विशिखाशनिवर्षिणः ।
भूरिश्रवा धैर्यनिधिर्वेगं गिरिरिवाग्रहीत् ॥ ७१३ ॥
तौ कृत्तकार्मुकरथौ खड्गचर्मधरौ मिथः ।
युध्यमानौ ददृशातुर्नान्तरं चित्रचारिणौ ॥ ७१४ ॥
सात्यकेः पातितस्याथ शिरश्छेत्तुं समुद्यतम् ।
जिष्णोरदर्शयद्दूराद्भूरिश्रवसमच्युतः ॥ ७१५ ॥
पार्थस्तस्यार्धचन्द्रेण सखड्गं भुजमुद्यतम् ।
कङ्कणारावसाक्रोशमिव च्छित्त्वा न्यपातयत् ॥ ७१६ ॥
स कृत्तबाहुर्धिकृत्य निन्दन्कृष्णकिरीटिनौ ।
तालुरन्ध्रोद्गतज्योतिर्योगेनात्मानमत्यजत् ॥ ७१७ ॥
अवाप्य संज्ञामज्ञातवृत्तः सात्यकिराकुलः ।
धिक्कृतः सर्वभूपालैश्चकर्तास्यासिना शिरः ॥ ७१८ ॥
युधिष्ठिराज्ञया व्यूहं प्रविशन्नथ मारुतिः ।
द्रोणं सरथमुत्क्षिप्य चिक्षेपाद्भुतविक्रमः ॥ ७१९ ॥
स निष्पिष्टगजानीकः प्रविष्टः कर्णमग्रतः ।
कृतायुधाश्वं षट्कृत्वश्चकाराहतकौरवः ॥ ७२० ॥

१. 'प्रकरं' क; 'समूहं' ख. २. 'षट्कृत्वा' ख-ग.

ततः कर्णः समुत्कृत्तकवचायुधवाहनम् ।
तुदन्भीमं धनुष्कोट्या नावधीज्जननीं स्मरन् ॥ ७२१ ॥
दिनस्य शिरसीवार्के लम्बमाने क्षणक्षये ।
दृष्ट्वा जयद्रथं दूरात्संदधेऽस्त्रं धनंजयः ॥ ७२२ ॥
क्षितौ तस्य शिरः क्षेप्तुः शिरः पूर्वं पतेदिति ।
पित्रा दत्तं[1] वरं कृष्णः फाल्गुनाय न्यवेदयत् ॥ ७२३ ॥
कुरुक्षेत्राद्बहिर्जिष्णुः संध्यासीनस्य तत्पितुः ।
चिक्षेपाङ्के शरोत्कृत्तं शिरस्तस्मात्क्षितिं ययौ ॥ ७२४ ॥
अक्षौहिणीः सप्त हत्वा[2] जिष्णुना सैन्धवे हते ।
दैवमेव जनो मेने सर्वथा निष्प्रतिक्रियम् ॥ ७२५ ॥
उक्त्वापि गुरुणा रक्षां रक्षिते न जयद्रथे ।
लज्जितेन समादिष्टं रात्रियुद्धमवर्तत ॥ ७२६ ॥
समुद्धततमःकेशी रणे तरलतारका ।
ननर्तासिभुजा वीररक्तक्षीबेव सा क्षपा ॥ ७२७ ॥
अर्धरात्रेऽथ निष्पिष्टकौरवानीकनायकः ।
शस्त्रानलशिखावर्षी[3] खं विवेश घटोत्कचः ॥ ७२८ ॥
तस्याट्टहासविस्पष्टदंष्ट्रांशुपटलैर्मुहुः ।
पाट्यमानमिवाकृष्टं रुरावाघट्टितं[4] तमः ॥ ७२९ ॥
कुरुसैन्ये रणे भग्ने हैडिम्बस्य प्रमाथिनः ।
कर्ण एव पुरस्तस्थौ पौलस्त्यस्येव राघवः ॥ ७३० ॥
एकवीरवधव्यक्त्या शक्त्या वैकर्तनोऽथ तम् ।
जघान घनसंमर्दे कुमार इव तारकम् ॥ ७३१ ॥
पञ्चमे युद्धदिवसे प्रातर्दिव्यास्त्रदुःसहः ।
प्रजागरगरक्षीबान्[5]क्षितीशानवधीद्गुरुः ॥ ७३२ ॥

---

१. 'दत्तवरं' क. २. 'जित्वा' क. ३. 'अस्त्राननशरावर्षी' ख; 'अस्त्रानलशिलावर्षी' ग. ४. 'रुरावाघाटितं' ख-ग. ५. 'क्षपाप्रजागरक्षीबान्' क.

हत्वा विराटं द्रुपदं पाञ्चालं च ससृञ्जयम्।
ब्रह्मास्त्रेणाकरोद्द्रोणः कल्पान्ताविर्भवभ्रमम्[1] ॥ ७३३ ॥
अश्वत्थामा हतः संख्ये स्पष्टमुक्त्वेति धर्मजः।
हस्तीत्यसत्यचकितः पश्चात्स्वैरमभाषत ॥ ७३४ ॥
श्रुतपुत्रवधस्याथ त्यक्तशस्त्रधृतेर्गुरोः।
उत्क्रान्तधाम्नः खड्गेन धृष्टद्युम्नः शिरोऽहरत् ॥ ७३५ ॥
हते द्रोणे प्रकुपितः कृतान्त इव तत्सुतः।
नारायणास्त्रमसृजज्ज्वालालीढजगत्त्रयम् ॥ ७३६ ॥
अस्त्रानले प्रज्वलिते वीराः सर्वे हरेर्गिरा।
रथेभ्योऽवातरन्न्यस्तशस्त्राः पवनजं विना ॥ ७३७ ॥
एकीभूतास्त्रदहनव्याप्तं भीममथाच्युतः।
हृतायुधं समाकृष्य रथाग्रादनयद्ध्रुवम् ॥ ७३८ ॥
शान्तेऽस्त्रे द्रौणिनाग्नेयं घोरमस्त्रमुदीरितम्।
ब्रह्मास्त्रेणार्जुनः शान्तिं निनाय प्रलयोद्यतम् ॥ ७३९ ॥
अथ मोहविषावेशसमनीलमणिप्रभम्।
प्राप्तं दृष्ट्वा मुनिं द्रौणिः प्रणम्य व्यासमभ्यधात् ॥ ७४० ॥
कस्मान्मे भगवन्नस्त्रवैकल्यम्लानमानता[2]।
मदस्त्रदहनान्मुक्तौ[3] कस्मात्कृष्णधनंजयौ ॥ ७४१ ॥
तमब्रवीन्मुनिर्द्रौणे[4] त्वमंशस्त्रिपुरद्विषः।
नरनारायणौ देवौ जातौ कृष्णधनंजयौ ॥ ७४२ ॥
मूर्तौ त्वयार्चितः शंभुराभ्यां लिङ्गे सुपूजितः[5]।
एतौ तेनाधिकौ त्वत्तस्त्यजैतां कोपविक्रियाम् ॥ ७४३ ॥
मुनिमाश्वासितद्रौणिं व्रजन्तं फाल्गुनः पुरः।
दृष्ट्वा रथादवप्लुत्य प्रणम्य तमभाषत ॥ ७४४ ॥

---

१. 'कल्पान्तविभव' ख-ग. २. 'वैक्लव्य' क. ३. 'दहनोन्मुक्तौ' क. ४. 'द्रौणिं' ख. ५. 'स पूजितः' ख.

भगवन्कौरवव्यूहं प्रविष्टेन मया पुरः।
अस्पृष्टभूमिः पुरुषो दृष्टः शूलकरः स कः ॥ ७४५ ॥
मुनिः प्राहार्जुनं देवः स स्वयं शशिशेखरः।
त्र्यम्बकस्त्रिपुरारातिस्त्र्यक्षस्त्रिपथगाधरः ॥ ७४६ ॥
स्मर स्मरारिं तमुमासहायं शिवं जगद्रासविलाससक्तम्।
भयापहं भीममनेकरूपमुक्त्वेति पार्थं प्रययौ मुनीन्द्रः ॥ ७४७ ॥
हते द्रोणे प्रियं मित्रं कौरवश्चिरचिन्तितम्।
कर्णं सेनापतिं कृत्वा जगज्जितममन्यत ॥ ७४८ ॥
अभ्यर्थ्य सारथिं शल्यं चक्रे तस्य सुयोधनः।
रुद्रस्य त्रिपुराराते: संनद्धस्येव वेधसम् ॥ ७४९ ॥
कीर्णास्त्रकिरणः कर्णस्ततः पाण्डववाहिनीम्।
शरत्तीव्र इवोष्णांशुर्निनायाल्पावशेषताम् ॥ ७५० ॥
भीमः कुरुचमूमध्ये क्षपयन्धृतराष्ट्रजान्।
कृष्णाकेशाम्बराकर्षकुशलं प्राप कौरवम् ॥ ७५१ ॥
असिकृत्तोरसस्तस्य भीमः शोणितमापपौ।
प्रकोपराक्षसावेशविवशः कुरुते न किम् ॥ ७५२ ॥
कर्णास्त्रपीडनक्रुद्धयुधिष्ठिरगिरार्दितः।
राधेयनिधनाधानसंनद्धोऽभूद्धनंजयः ॥ ७५३ ॥
प्रवृत्ते संभृतामर्षे रणे कर्णकिरीटिनोः।
मृगस्त्वं जिष्णुसिंहाग्रे कर्णमित्याह मद्रपः ॥ ७५४ ॥
खण्डपुच्छाभिधं नागमथ संधाय संचितम्।
प्राहिणोत्पाण्डुपुत्राय कर्णः खाण्डवखण्डितम् ॥ ७५५ ॥
हरिगौरवनम्रश्च(स्य) विनतस्य स पन्नगः।
जहाराप्राप्तकण्ठाग्रः किरीटांशं किरीटिनः ॥ ७५६ ॥
भूग्रस्तचक्रमुद्धर्तुमथ स्वरथमुद्यतः।
क्षणक्षमार्थी राधेयः पार्थस्यातिथितां ययौ ॥ ७५७ ॥

१. 'परः' ख-ग. २. 'वेधसा' ख-ग. ३. 'गिरार्पितः' ख-ग. ४. 'कण्ठांशः' ख-ग. ५. 'क्षमार्थी' क.

कृष्णस्तमब्रवीद्व्रीडाकरशल्योक्तिपीडितम् ।
धर्मः स्मृतोऽद्य राधेय नाभिमन्युवधे त्वया ॥ ७५८ ॥

यथा तप्तस्यान्ते भवति मृदुता संनतिमयी
तथा सा स्यात्पूर्वं यदि जनमता वृत्तिरथ सः (?) ।
घनाघातोत्कर्षापरपुरुषहुंकारविहिता
न तस्यासीत्पीडा निबिडजडतावाप्तविकृतेः ॥ ७५९ ॥

इत्युक्ते शौरिणा कर्णः समारुह्य रथं पुनः ।
संदधे भार्गवादिष्टं महास्त्रं शिथिलस्मृतिः ॥ ७६० ॥

बाणेन कृत्तगलमञ्जलिकाभिधेन
तस्यार्जुनस्तरलकुण्डलदीप्तगण्डम् ।
वक्त्रं जहार पृथुहारविलम्बिशोण-
रत्नप्रभानिभनभः प्रसृतप्रकाशम् ॥ ७६१ ॥

हते कर्णे वहन्नन्तःशोकशल्यं सुयोधनः ।
शल्यं सेनापतिं कृत्वा युयुधे निधनोत्सुकः ॥ ७६२ ॥

शल्येन पीडितं दृष्ट्वा निजसैन्यं युधिष्ठिरः ।
भ्रूभङ्गकङ्कवक्राङ्कस्तं समुद्धर्तुमाद्रवत् ॥ ७६३ ॥

तस्येषुवर्षिणश्छित्त्वा रथसारथिकार्मुकान् ।
प्राहार्षीत्[1]पाण्डवः शक्तिं कालदंष्ट्रामिवोत्कटाम् ॥ ७६४ ॥

प्रविश्य शल्यहृदयं शक्तिर्बिलमिवोरगी ।
वेगशूत्कारनिःश्वासा साविशद्वसुधातलम्[2] ॥ ७६५ ॥

स्वयं राज्ञा हते शल्ये सहदेवेन सौबले ।
सैन्ये शेषे च भीमेन निःसैन्योऽभूत्सुयोधनः ॥ ७६६ ॥

कृतवर्मकृपद्रौणिशेषः कुरुपतिस्ततः ।
विरथस्तान्समामन्त्र्य विवेशालक्षितो ह्रदम् ॥ ७६७ ॥

ह्रदस्यान्तर्नृपे तस्मिन्प्रविष्टे शत्रुशङ्किते ।
भीमं भीमभयेनेव पयश्चिरमकम्पत ॥ ७६८ ॥

---

१. 'प्राहैषीत्' क. २. 'तले' ख-ग.

यस्याशेषनरेशरत्नमुकुटैः पीडाभवत्पादयो-
स्तस्यारातिनिपातशङ्कितमतेरेकाकिनोऽन्तर्जले।
क्रोधव्याधुतनक्रचक्रमकरक्रूरान्तदन्ताहति-
क्लेश[1]क्रान्तिरभूद्विगस्थिरपदाः शोकप्रदाः संपदः ॥७६९॥
ऋणशेषमिव ध्यायन्धार्तराष्ट्रं युधिष्ठिरः।
लुब्धकानां गिरा ज्ञात्वा ससैन्यस्तूर्णमाययौ ॥ ७७० ॥
स्तिमितं सलिलस्थं तं जगाद च तटस्थितः।
राजन्नुत्तिष्ठ लज्जेयं युक्तं नान्ते पलायनम् ॥ ७७१ ॥
कृत्वा क्षत्रक्षयं शेषां रक्षसि क्षत्रियस्तनुम्।
एकेन सह युध्यस्व जिते तस्मिञ्जिता वयम् ॥ ७७२ ॥
श्रुत्वैतत्सहसोत्थाय तमभाषत कौरवः।
एष क्षपाक्षपणधीः प्रविष्टोऽहं [2]जलान्तरम् ॥ ७७३ ॥
न मे राज्ये शरीरे वा तृणे वापि स्पृहा क्वचित्।
इत्युक्त्वा सहितः सर्वैः स कुरुक्षेत्रमाययौ ॥ ७७४ ॥
अत्रान्तरे हलधरः श्रुत्वा कुरुकुलक्षयम्।
सारस्वतेषु तीर्थेषु स्नात्वा तं देशमाययौ ॥ ७७५ ॥
प्रधानक्षेत्रके तस्मिन्नुपविष्टे सहामरैः।
भीमकौरवयोश्चित्रं गदायुद्धमवर्तत ॥ ७७६ ॥
वर्ज्यमानेऽथ भीमेन प्रहारे कौरवेण च।
तदाघातच्युते भीमे भीमाघातेन चापरे ॥ ७७७ ॥
सुचिरं संशयतुलारूढे स्वभटमण्डले।
न तयोरन्तरं कश्चिद्ददर्शाश्चर्ययोधिनोः ॥ ७७८ ॥
अथ भीमगदाघातभिन्नोरुः कौरवेश्वरः।
पपात कीर्णहाराश्रुधारां कुर्वन्निव क्षितिम् ॥ ७७९ ॥
पदा भीमेन तन्मौलौ स्पृष्टे क्रुद्धं हलायुधम्।
शमयामास कंसारिर्वदन्कौरवदुर्नयम् ॥ ७८० ॥

---

१. 'क्लेशाक्रान्ति' ख-ग. २. 'जलान्तरे' ख-ग.

प्रयातेष्वथ सर्वेषु द्रौणिहार्दिक्यगौतमाः ।
निशि देशं तमभ्येत्य ददृशुः पतितं नृपम् ॥ ७८१ ॥
भिन्नोरुमध्यव्यथया दन्तदष्टमहीतलम् ।
वारयन्तं गदाग्रेण गृध्रगोमायुवायसान् ॥ ७८२ ॥
तं दृष्ट्वा द्रौणिरवदत्तीव्रहृन्मर्मवेदनः ।
किं त्वया निःसहायेन शत्रुवह्नौ हुता तनुः ॥ ७८३ ॥
अकृष्णपाण्डवं लोकं करोमि तव शासनात् ।
इत्युक्त्वा तद्गिरा गत्वा प्रविवेश महद्वनम् ॥ ७८४ ॥
कृपभोजसखस्तत्र रात्रौ काकान्निपातितान् ।
उलूकैर्वृक्षमूलस्थः स दृष्ट्वाचिन्तयच्चिरम् ॥ ७८५ ॥
काकान्कालबलेनैते घ्नन्त्येषारिवधे स्थितिः ।
हन्तुं पाण्डुसुतान्रात्रौ सुप्तानेव व्रजाम्यहम् ॥ ७८६ ॥
ध्यायन्निवार्यमाणोऽपि कृपेण कृतवर्मणा ।
क्रोधादगणयन्पापं स ताभ्यां प्रययौ सह ॥ ७८७ ॥
पाण्डवेषु गिरा शौरेः सुप्तेष्वन्यत्र शङ्कया ।
पाञ्चालसेनाशिबिरद्वारं द्रौणिरवाप्तवान् ॥ ७८८ ॥
तत्र दृष्ट्वा महद्भूतं सर्पकेयूरकङ्कणम् ।
प्रादुर्भूतं शिरश्छित्त्वा वह्नौ क्षेप्तुं समुद्यतः ॥ ७८९ ॥
प्रीत्या भगवता तेन रुद्रेण स्वयमर्पितम् ।
द्रौणिर्निस्त्रिंशमादाय विवेशारिक्षयोत्सुकः ॥ ७९० ॥
पद्भ्यामशस्त्रनिधनं धृष्टद्युम्नं विधाय सः ।
शिखण्डिनं द्विधा कृत्वा जघानाक्षौहिणीं क्षणात् ॥ ७९१ ॥
स सुप्तवधपापेन प्रलिप्तः शोणितेन च ।
कृतान्तक्रूरचरितः प्रययौ कौरवान्तिकम् ॥ ७९२ ॥
निःशेषशत्रुनिधनं श्रुत्वा द्रौणिनिवेदितम् ।
स्वर्गेऽस्तु सङ्ग इत्युक्त्वा नृपस्तत्याज जीवितम् ॥ ७९३ ॥

---

१. 'छिन्नोरु' क. २. 'व्याघ्र' ख-ग. ३. 'वेदनम्' ख-ग. ४. 'मथनं' क.

प्रातर्बन्धुवियोगार्तौ कृष्णाशोकाग्नितापितौ ।
भीमार्जुनौ प्रययतुः क्रुद्धौ द्रौणिजिघांसया ॥ ७९४ ॥
द्रौणिः सरस्वतीतीरे चरन्व्रणघृताप्लुतः ।
दृष्ट्वा भीमार्जुनावस्त्रं ब्रह्मशीर्षमवासृजत् ॥ ७९५ ॥
अर्जुनो ब्राह्ममस्त्रं च संघर्षेणास्त्रयोस्तयोः ।
अकालप्रलयारम्भसंरम्भोऽभूद्दिवौकसाम् ॥ ७९६ ॥
तद्द्रौणिमुक्तमपतन्महास्त्रं व्यासशासनात् ।
अभिमन्युवधूगर्भे द्रौणिचूडामणौ परम् ॥ ७९७ ॥
पाण्डवाः पुत्रशोकार्तं धृतराष्ट्रं प्रलापिनम् ।
गान्धारीसहितं गत्वा प्रणेमुर्लज्जिताः शनैः ॥ ७९८ ॥
क्रमादालिङ्गने भीमः शौरिबुध्यायसः कृतः ।
चूर्णतामगमद्गाढं धृतराष्ट्रेण पीडितः ॥ ७९९ ॥
युधिष्ठिरस्य गान्धारीं सतीं प्रणमतः पुरः ।
तद्दृष्टिः सानलज्वाला पादाङ्गुष्ठयुगेऽपतत् ॥ ८०० ॥
स्नुषाभिः सह गान्धारी स्वयं गत्वा रणावनिम् ।
दृष्ट्वा हतान्सुतान्कृष्णं शशाप क्षयकारणम् ॥ ८०१ ॥
षट्त्रिंशवत्सरे कृष्ण तवाप्येवं कुलक्षयः ।
भविष्यतीति तद्वाक्यं श्रुत्वा तामच्युतोऽवदत् ॥ ८०२ ॥
पुनरुक्तस्त्वयायं मे दत्तः शापः पतिव्रते ।
अवश्यमेव भविता तस्मिन्वर्षे यदुक्षयः ॥ ८०३ ॥
ततः कृतोदकविधिर्बान्धवक्षयदुःखितः ।
राज्यं न लेभे मुनिभिर्बोधितोऽपि युधिष्ठिरः ॥ ८०४ ॥
कर्णं कुन्तीगिरा ज्ञात्वा भ्रातरं निहतं रणे ।
स शुशोच शुचाक्रान्तस्ततस्तं नारदोऽवदत् ॥ ८०५ ॥
क्षत्रियाचार्यके भीष्मनिकारात्कृतसंयमम् ।
अस्त्रार्थी भार्गवं कर्णः प्रययौ विप्रवेषवान् ॥ ८०६ ॥

---

१. 'द्रौणेः' क. २. 'आलिङ्गनात्' क. ३ 'प्रययौ' ख-ग.

रामस्तदङ्कसुप्तोऽर्धनिद्रासंक्षयभीरुणा ।
क्रूरक्रिमिक्षतेनापि कर्णेन न विबोधितः ॥ ८०७ ॥
तद्रक्ताक्तः प्रबुद्धोऽथ दृष्ट्वा क्लेशेऽपि निश्चलम् ।
रामः कर्णं न विप्रोऽसीत्युक्त्वास्त्रं विफलं व्यधात् ॥ ८०८ ॥
गुरुशप्तः स शक्रेण हृतसंनाहकुण्डलः ।
घटोत्कचे नष्टशक्तिः शल्याधिक्षेपशल्यवान् ॥ ८०९ ॥
द्विजवत्सापराधेन भूग्रस्तरथनिष्फलः ।
हतः कर्णः कुरुपतेः कुमन्त्रकृतसंक्षयः ॥ ८१० ॥
नारदेनेत्यभिहिते व्यासमुख्यैर्महर्षिभिः ।
कृष्णेन भ्रातृभिः सर्वैः प्रयत्नेन विबोधितः ॥ ८११ ॥
राज्यं कथंचिज्जग्राह शल्यतुल्यं युधिष्ठिरः ।
कस्य बन्धुवियोगार्तिनिःश्वासोष्णाः श्रियः प्रियाः ॥ ८१२ ॥
अभिषेकार्द्रमुकुटं समेत्याथ युधिष्ठिरम् ।
उवाच ब्राह्मणाकारश्चार्वाको नाम राक्षसः ॥ ८१३ ॥

छत्रं त्रपाकरमहो व्यजनं जनाग्रे
दुःखप्रदं प्रविसृताश्रुकणानुकारः ।
हारः परं स्वजनमित्रवियोगशोक-
पीडावतां बत विडम्बनमेव लक्ष्मीः ॥ ८१४ ॥

चार्वाकस्येति वचसा राज्यत्यागोद्यते नृपे ।
राक्षसः कौरवसुहृद्द्विप्रकोपात्क्षयं ययौ ॥ ८१५ ॥
ज्ञात्वोत्तरायणं प्राप्तं शरशय्याश्रयस्ततः ।
मुनिमध्ये[1]ऽस्मरद्विष्णुं भीष्मः पर्यन्तबान्धवम् ॥ ८१६ ॥

दोषाश्रयाखिलतमःशमसूर्यधाम
संसारसर्पविषवारणसिद्धमन्त्रः ।
शुद्धात्मनां भवति पुण्यपणोपपन्नं
पाथेयमन्तसमये स्मरणं मुरारेः ॥ ८१७ ॥

---

१. 'स्मरन्' क.

स्तुतिप्रवृत्तं विज्ञाय भगवान्भीष्ममच्युतः ।
सहितः पाण्डवैर्द्रष्टुं ययौ प्रीत्या ससात्यकिः ॥ ८१८ ॥
प्रणतं भीष्ममभ्यर्च्य हरिः सुरमुनिस्तुतः ।
शरशल्यव्यथाहीनं स्निग्धदृक्सुधया व्यधात् ॥ ८१९ ॥
देहसंन्याससंनद्धं राजा लज्जानतः शनैः ।
शासनेन हरेर्भीष्मं श्रेयः पप्रच्छ धर्मजः ॥ ८२० ॥
सोऽब्रवीद्भूभुजां राजन्भूषणं जनरञ्जनम् ।
धर्मः प्रजापरित्राणं कोषः सद्भृत्यसंग्रहः ॥ ८२१ ॥
प्रजाकार्ये सक्तिः श्रवणमभिभूतार्तवचसां
स्पृहा कामक्रोधप्रमदमदमानव्युपरमे ।
क्षितेः[1] कायस्थेभ्यः कृपणपरिरक्षा प्रतिपदं
गुणासङ्गः श्रेयानयमुदयलक्ष्म्या क्षितिभृताम् ॥ ८२२ ॥
विरक्तस्वीकारः कृतकविरतिः कोषभरणं
बलाधिक्ये शत्रोः शरणगमनं[2] पादपतनम् ।
प्रहारश्छिद्राप्तौ निहतरिपु[3]मिथ्याश्रुपतनं
धिया दैवादिष्टं शरणमिदमापन्निपतने ॥ ८२३ ॥
आशापाशविमुक्तनिश्चलसुखा स्वायत्तचित्तस्थितिः
स्नेहद्वेषविषादलोभविरतिः संतोषतृप्तं मनः ।
चिन्ता नित्यमनित्यतापरिचये सङ्गेऽपि निःसङ्गता
संवित्सेकविवेकपूतमनसामित्येष मोक्षक्रमः ॥ ८२४ ॥
कारुण्याद्गलितं प्रदानसमये चित्तं प्रसन्नं सदा
क्षीणः पुत्रकलत्रदुःखकृपणः पात्रं पवित्रं परम् ।
सश्रद्धं परवित्तशल्यरहितं वित्तं स्वधर्मार्जितं
तद्दानं दयितं फलप्रियतया वाणिज्यसज्जं न यत् ॥ ८२५ ॥
इत्युक्त्वा विविधं भीष्मः सर्वधर्मार्थसंग्रहम् ।
विष्णोर्नामसहस्राख्यं मन्त्रराजमुदीर्य[4] तम् ॥ ८२६ ॥

१. 'क्षितिः' ख-ग. २. 'गमने' क-ख. ३. 'नृप' ख-ग. ४. 'उदीर्यत' क; 'उदीर्यते' ख.

[1]कर्मोदितबलोत्क्षिप्तबिन्दुभेदप[2]थोदितम् ।
तालुरन्ध्रोच्चलज्ज्योतिर्योगेनात्मानमत्यजत् ॥ ८२७ ॥
अथ भीष्मवियोगार्तः पापशान्त्यै युधिष्ठिरः ।
अश्वमेधाभिधे चक्रे यज्ञे व्यासाज्ञया मतिम् ॥ ८२८ ॥
अथैकान्तस्थितः कृष्णः पुनः पृष्टः किरीटिना ।
यत्प्राह समरारम्भे [3]ज्ञानयोगं तदुक्तवान् ॥ ८२९ ॥
कदाचिदथ कंसारिं दृष्ट्वा पथि रथस्थितम् ।
ऊचे मुनिरुतङ्काख्यः कुरुसंक्षयदुःखितः ॥ ८३० ॥
शक्तेनोपेक्षितः कस्माद्भवता भरतक्षयः ।
न युक्तं कृतमित्युक्त्वा को[4]पाच्छापोद्यतोऽभवत् ॥ ८३१ ॥
ततस्तस्मै स्मितमुखः शौरिर्देहतमोहरम् ।
[5]भासुरार्कसहस्राभं विश्वरूपमदर्शयत् ॥ ८३२ ॥
अथाभिमन्युदयिता दिव्यास्त्रहतमुत्तरा ।
मत्स्यराजसुतासूत भस्मीभूताकृतिं शिशुम् ॥ ८३३ ॥
सुभद्रयार्थितः स्वस्रा भगवान्भूतभावनः ।
द्रोणपुत्रास्त्रनिर्दग्धं शौरिः शि[6]शुमजीवयत् ॥ ८३४ ॥
कुरुवंशे परिक्षीणे संजातस्याङ्कुराकृतेः ।
[7]परीक्षिदिति बालस्य नाम चक्रे त्रिविक्रमः ॥ ८३५ ॥
अथ यज्ञाश्वरक्षायै व्रजञ्जिष्णुर्जगज्जयी ।
मणिपूरपुरे प्राप बभ्रुवाहनमात्मजम् ॥ ८३६ ॥
तेनाविज्ञाय समरे सायकैः पातितोऽर्जुनः ।
उलूप्या नागसुतया रत्नेनार्पितजीवितः ॥ ८३७ ॥
प्रययौ हयमादाय स्वपुरं भ्रातुरन्तिकम् ।
प्रावर्तत च भूभर्तुर्य[8]ज्ञः काञ्चनवर्षिणः ॥ ८३८ ॥

---

१. 'छन्दोदित' क. २. 'पथोत्थितम्' ख-ग. ३. 'योगज्ञानं' ख. ४. 'कोपशापो' क. ५. 'ससुरार्क' ख-ग. ६. 'पुत्रं' क. ७. 'परिक्षिदिति' क. ८. 'यज्ञं' ख-ग.

अथैकपार्श्वे कनकद्युतिभृन्नकुलोऽद्भुतः।
विप्रकोटिशतोच्छिष्टभुवं भेजे लुठत्तनुः॥ ८३९॥
सोऽब्रवीद्भूभुजा पृष्टः शिलोञ्छस्वच्छवृत्तिना।
सुचिरावाप्तमशनं प्राप्तायातिथयेऽर्पितम्॥ ८४०॥
तदुच्छिष्टजलस्पृष्टं पार्श्वं मे हेमतां गतम्।
द्वितीयपार्श्ववर्णाप्त्यै प्राप्तोऽहं त्वत्क्रतुक्षितिम्॥ ८४१॥
निःसंख्यब्राह्मणोच्छिष्टस्पृष्टस्यापि न मे द्युतिः।
जाता सत्त्वोज्ज्वलं याति दानमल्पमनल्पताम्॥ ८४२॥
इत्युक्त्वा नकुले याते दानमानमहोन्नतिः।
सर्वस्वदक्षिणे यज्ञे राजा(ज्ञः) शिथिलतां ययौ॥ ८४३॥
अथ दैवतवन्नित्यं पूज्यमानोऽपि भूभुजा।
भीमोग्रवचनोद्वेगी धृतराष्ट्रः शनैरभूत्॥ ८४४॥
स सदा पुत्रशोकेन भूमिशायी फलाशनः।
मिथ्याराज्योपभोगार्तिं धर्मजाय न्यवेदयत्॥ ८४५॥
स जातगाढवैराग्यः[1] पत्न्या सह वनं ययौ।
व्यासाज्ञया संजयेन कुन्त्या च विदुरेण च॥ ८४६॥

दयितजनवियोगोद्वेगरोगातुराणां
विभवविरहदैन्यम्लानमानाननानाम्।
शमयति शितशल्यं हन्त नैराश्यनश्य-
द्भवपरिभवतान्तिः शान्तिरन्ते वनान्ते॥ ८४७॥

यातस्तपःस्थितं द्रष्टुं धृतराष्ट्रं युधिष्ठिरः।
ददर्श विदुरं ज्ञानयुक्तित्यक्तकलेवरम्॥ ८४८॥
प्राप्तः स्वनगरं राजा शुश्राव कुरुपुंगवम्।
सानुगं दावदहने प्रविष्टं संजयं विना॥ ८४९॥
षट्त्रिंशेऽब्दे[2] सुखक्षीबा वृष्णयः कृष्णनन्दनम्।
साम्बं स्त्रीवेषमादाय पप्रच्छुः सस्मिता मुनीन्॥ ८५०॥

१. 'वैराग्य' ख-ग. २. 'षट्त्रिंशाब्दे' क.

भावी सुतः सुता वा स्यात्किमिति श्रीविशृङ्खलाः ।
क्रुद्धास्तान्मुनयः प्राहुर्भविष्यति कुलान्तकः ॥ ८९१ ॥
कालेन लोहमुसलं जातं साम्बस्य वृष्णयः ।
घृष्ट्वा घृष्ट्वाम्बुधेस्तीरे तत्यजुः क्षयशङ्किताः ॥ ८९२ ॥
तच्चूर्णजातवल्लीभिः क्षीबाः स्पर्धाकथाक्रुधा ।
निर्बन्धाद्युध्यमानास्ते क्षणेन क्षयमाययुः ॥ ८९३ ॥
कृष्णः कुलक्षयोद्विग्नस्तेजः[1] स्वं धाम्नि वैष्णवे ।
हेम हेम्नीव निक्षिप्य प्रययौ कायशेषताम् ॥ ८९४ ॥
याते प्रविश्य पातालमनन्तत्वं हलायुधे ।
लुब्धकेन हरिः सुप्तः कृष्णसारधिया हतः ॥ ८९५ ॥
अनल्पं[2] कल्पान्तस्थिरमिव जनः कल्पयति य-
न्न यस्मिन्नाशङ्का सुरगिरिगरिम्णि प्रचलने[3] ।
तदेवाक्ष्णः पक्ष्माञ्चलतरलविक्षेपतुलया
क्षयक्षीबः कालः किल गिलति नैवाभवदिति ॥ ८९६ ॥
अथ वृष्णिक्षयं ज्ञात्वा द्वारकामेत्य फाल्गुनः ।
शोकार्तस्तद्वधूवृन्दं स्वपुरं नेतुमुद्ययौ ॥ ८९७ ॥
व्रजतस्तस्य गोपाला बृहल्लगुडपाणयः[4] ।
जह्रुराकृष्टचापस्य स्त्रैणमाकीर्णपत्रिणः ॥ ८९८ ॥
ते द्विषत्खण्डनां[5] प्रापुः शरा गाण्डीवधन्वनः ।
निष्फलत्वं विलक्षस्य याचकस्य गुणा इव ॥ ८९९ ॥
नहि हीनमनाक्रान्त्या फाल्गुनस्य गलद्गुणम् ।
कलत्रं निर्धनस्येव[6] विधेयं नाभवद्धनुः ॥ ८१० ॥
रुद्राभिद्रवमुद्रिताद्रिशिखराः शक्रोन्मुखाः खाण्डवे
खेलोत्तालल्तायुधोद्यतकृताटोपेषु गोपेष्वहो ।

१. 'तेजसां' ख-ग. २. 'अनन्तं' ख-ग. ३. 'प्रदलने' ख. ४. 'लडल्लगुड' क. ५. 'खण्डनाः' ख-ग. ६. 'निर्गुणस्येव' ख-ग.

जग्मुर्जिष्णुशरा मुरारितरुणीत्राणे तृणक्लीबतां
यस्यायन्त्रविचित्रपाककलया कालाय तस्मै नमः ॥ ८६१ ॥
युधिष्ठिरोऽथ विभवं ज्ञात्वा पर्यन्तताद्दशम् ।
भ्रातृभिः सह पत्न्या च महाप्रस्थानमाविशत् ॥ ८६२ ॥
कृष्णायाः पतने प्राह राजा विजयरक्तताम् ।
प्रियस्य दोषाकलनं वियोगे[1] दुःखभेषजम् ॥ ८६३ ॥
सोऽवदत्प्रच्युतस्याथ सहदेवस्य धीमदम् ।
नकुलस्यादरं रूपे जिष्णोर्विजयदृप्तताम् ॥ ८६४ ॥
भीमस्य बह्वशनतां व्रजन्नेव शुना सह ।
पर्यन्तेऽचिन्तयन्नन्तः संसारविशरारुताम् ॥ ८६५ ॥
अथ व्योमपथायातं विमानं सुकृतोज्ज्वलम् ।
देवदूतार्पितं राजा नारुरोह शुना विना ॥ ८६६ ॥
ततस्याश्रितवात्सल्यं धर्मस्त्यक्तश्वविग्रहः ।
तुष्टः स्वं रूपमास्थाय[2] प्रशशंस पुनः पुनः ॥ ८६७ ॥
अथ राजा समारुह्य विमानं त्रिदिवं व्रजन् ।
ददर्श नरकं घोरं देवदूतप्रदर्शितम् ॥ ८६८ ॥
ततस्तद्दर्शनोद्विग्नं देवदूतस्तमब्रवीत् ।
राजन्द्रोणवधासत्यान्मिथ्यैतत्तव दर्शितम् ॥ ८६९ ॥
प्रजापीडाक्रीडार्जितधनभरैर्भोगसुखिना-
मकर्णानां क्राम्यत्कृपणकरुणाक्रन्दसमये ।
अवश्यं भूपानां भवति विभवोन्मादकुधियां
दुरन्ता पर्यन्ते नरककलुषक्लेशकुगतिः ॥ ८७० ॥
इत्युक्ते देवदूतेन शक्रलोकं युधिष्ठिरः ।
धर्मधाम निजं भेजे स्वं स्वं चान्ये सुरांशजाः ॥ ८७१ ॥
लक्ष्मीश्चामरतारहारहसिता मत्तेभकुम्भस्तनी
त्रैलोक्याक्रमणः पराक्रमभरः संभोगयोग्यं वयः ।

१. 'विहेयं च' ख-ग. २. 'आदाय' ख-ग.

पूर्वं सर्वमखर्वगर्वसुखदं संचर्व्यमाणं पुनः
पर्यन्ते परिणाममीलदखिलास्वादं विषादास्पदम् ॥ ८७२ ॥
इति स भुवनभूत्यै भूतभर्ता विधाय
प्रसभविभवशक्त्या भूमिभारावतारम् ।
अगमदमरसंघैः[1] कीर्त्यमानप्रभावः
सह नरमुनिना स्वं धाम नारायणांशः ॥ ८७३ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते दशावतारचरिते श्रीकृष्णावतारोऽष्टमः ।

---

बुद्धावतारो नवमः ।

काले प्रयाते कलिविप्लवेन रोगग्रहोग्रे[2] भगवान्भवाब्धौ ।
मज्जत्सु संमोहजले जनेषु जगन्निवासः करुणान्वितोऽभूत् ॥ १ ॥
स सर्वसत्त्वोपकृतिप्रयत्नः कृपाकुलः शाक्यकुले विशाले ।
शुद्धोदनाख्यस्य नराधिपेन्दोर्धन्यस्य गर्भेऽवततार पत्न्याः ॥ २ ॥
मायाभिधाना नरनाथपत्नी गर्भे हरिं विश्वगुरुं वहन्ती ।
आसन्नचन्द्रेव सुधाब्धिवेला निधानधन्येव वसुंधराभूत् ॥ ३ ॥
कुक्षिं ततस्तत्क्षणमक्षताया विभिद्य मातुर्भगवान्प्रजातः ।
गर्भोदकास्पृष्टविशुद्धमूर्तिर्जाम्बूनदेनेव विनिर्मिताङ्गः ॥ ४ ॥
स जातमात्रस्त्रिदशप्रमुक्तनभोनदीवारिभराभिषिक्तः ।
पदत्रयीं कम्पितसर्वलोकां दत्त्वा दिशन्दिक्षु भृशं जगाम ॥ ५ ॥
पूर्वा स्थितेयं मम निर्वृतिर्मे धीः सर्वसत्त्वोद्धृतिदक्षिणेयम् ।
जन्मस्थितिः संप्रति पश्चिमेयं संसारबन्धादियमुत्तरा च ॥ ६ ॥
इति ब्रुवाणं नृपतिस्तमेत्य दृष्ट्वा त्रिलोकीपतिलक्षणाङ्कम्[3] ।
स जातदिव्यानुभवाभिमानः[4] कुलस्य भूत्यै धृतिमाबबन्ध ॥ ७ ॥
तं लक्षणज्ञा जगदुः सहर्षमयं शिशुर्लक्षणलक्ष्यमाणः ।
प्रभुर्भविष्यत्यवनीश्वराणामनुत्तरज्ञाननिधिर्मुनिर्वा[5] ॥ ८ ॥

---

१. 'सङ्घैः' क; 'संख्यैः' ख-ग. २. 'रागोरगोग्रे' क. ३. 'लक्ष्मणाङ्कम्' ख-ग.
४. 'भिमानं' क. ५. 'स्म' ख-ग.

स सर्वविद्याविदितार्थतत्त्वः संप्राप्तशस्त्रास्त्रगजाश्वशिक्षः ।
सर्वार्थसिद्ध्या पितुराप्तकीर्तिः सर्वार्थसिद्धाभिधतां जगाम ॥ ९ ॥
सर्वस्वदानाभिमुखोऽर्थिसार्थे स देहदाने तृणवत्कृतेच्छः ।
लीलाविहारी विचरन्रथेन ददर्श वृद्धं पथि जीर्णकायम् ॥ १० ॥
तं वीक्ष्य विच्छायमशक्तिलुप्तमवाप्तपर्याप्तविरक्तभावः ।
सोऽचिन्तयन्निश्चितमन्तसक्ता कायस्य निर्वेदमयी दशेयम् ॥ ११ ॥
अहो बतायं जरयाभिभूतः कुरूपतां क्लेशमयीं प्रयातः ।
तारुण्यमाकुञ्चितकृष्णकेशं शोचन्निवान्तः श्वसिति प्रकामम् ॥ १२ ॥
महीनिविष्टाकृतिरल्पदृष्टिः किं कष्टचारी नगरे करोति ।
संतोषशीतं श्रयति प्रशान्त्यै किमाश्रमं श्रान्ततनुर्न वृद्धः ॥ १३ ॥

भ्रमः कासश्वासः कफभररवः कण्ठकुहरे
श्रुतौ नेत्रे घ्राणे त्वचि सरसनायां विफलता ।
अहो वृद्धस्यास्मिन्सकलविरहक्लेशसमये
प्रमोहस्तृष्णां यत्त्यजति दयितां नैव तरुणीम् ॥ १४ ॥

क्षणं विचिन्त्येति नरेन्द्रसूनुर्व्रजन्पुरप्रान्तविलोकनाय ।
शोकाश्रयं हर्षविषादधाम श्मशानमाकीर्णशवं ददर्श ॥ १५ ॥
स सारथिं प्राह विलोक्य लीनं शरीरिणां कायमपायभूमौ ।
अनित्यताचिन्तनजातखेदः संसारवैरस्यविचारसक्तः ॥ १६ ॥

क्लेदामोदविविघ्नवायसशुनः कुत्सापदस्याशुचे-
रन्ते यस्य दशेदृशी क्षयमयी कायस्य भूशायिनः ।
मूढास्तस्य कृते परार्थहरणोद्योगं परस्त्रीरति-
व्यासक्तिं परदेहदारणघनद्रोहं नराः कुर्वते ॥ १७ ॥

नासत्यं न परापवादपिशुनं नो मर्मभिद्भाषते
नैराश्येन विशेषशीतलतनुः सेवाप्रवासोज्झितः ।

१. 'निश्चयं' ख-ग. २. 'प्रकाशम्' ख-ग. ३. 'आश्रयं' ख-ग. ४. 'अस्य' ख-ग.
५. 'प्रवासोज्झितः' क.

पापोपार्जनवर्जितः परगृहे द्वाःस्थैरसंतर्जितः
कामद्वेषविषादमोहैरहितः पश्यैष शेते शवः ॥ १८ ॥
क्षितिप्रतिष्ठस्य कलेवरस्य पर्यन्तभूमावियमेव निष्ठा ।
यत्काष्ठपाषाणसमानचेष्टं प्रयाति मृद्भस्मशकृत्क्रिमित्वम् ॥ १९ ॥
उक्त्वेति वैराग्यमयीं प्रशान्तिं श्रयन्विचिन्त्यान्तविनाशि सर्वम् ।
अन्तःपुराभ्यन्तरमेत्य सोऽभूद्विभूतिभोगे शिथिलाभिलाषः ॥ २० ॥
अन्तःपुरे तस्य नृपात्मजानां सहस्रषष्ट्या हरिणेक्षणानाम् ।
चित्रार्पितानामिव संगमोऽभून्न शान्तिसक्तस्य सुखानुभावः ॥ २१ ॥
ततः क्षितीशं समुपेत्य सर्वे मौहूर्तिकाः संसदि तत्त्वमूचुः ।
राजन्सुतस्ते भविता त्रिलोकीपतिः प्रभावे भगवाञ्जिनो वा ॥ २२ ॥
श्रुत्वेति राजा भुवनाधिपत्यं पुत्रस्य यत्नेन समीहमानः ।
वनाभिकामस्य तपो निरोद्धुं चक्रे पुरद्वारविशेषगुप्तिम् ॥ २३ ॥
अत्रान्तरे शान्तिपथं प्रवेष्टुमाशापरित्यागधृतावधानः ।
अस्ताद्रिशृङ्गाश्रमधाम्नि सूर्यः संध्याकषायाम्बरमाललम्बे ॥ २४ ॥
रवौ प्रयाते ककुभां बभूव घनोऽनुरागः क्षणमात्रलक्ष्यः ।
प्रेमाणि चित्तानि च जीवलोके विद्युद्विलोलानि न कस्य नाम ॥ २५ ॥
रवेर्वियोगे गुणिवल्लभस्य शोकानुकारेण तमोभरेण ।
स्नेहेन साधोरिव बन्धुवर्गः पद्माकरः क्लेशनिमीलितोऽभूत् ॥ २६ ॥
दिक्केशपाशप्रतिमं तमस्तद्दीपावलीचम्पकमालिकाङ्कम् ।
लेभे वियोगाच्च(र्त)वधूसराग्निस्थानस्फुलिङ्गाकुलधूमलीलाम् ॥ २७ ॥
अथोद्ययौ सत्त्वसितप्रकाशः सुधां दधानः करुणामिवान्तः ।
निवारयन्मोहघनान्धकारं विश्वोपकाराय शशी प्रवृत्तः ॥ २८ ॥
चन्द्रोदयेऽन्तःपुरसुन्दरीणां प्रसाधनव्यग्रपरिग्रहाणाम् ।
शृङ्गारलीलासमयं विलोक्य क्षणं प्रदध्यौ नरनाथसूनुः ॥ २९ ॥

१. 'दोष' क. २. 'विभ्रं' ख-ग. इतः प्रभृति एकोनचत्वारिंशश्लोकस्य प्रथमपादपर्यन्तं ख-ग-पुस्तकयोस्त्रुटितमस्ति.

इमाः संमोहाभ्रप्रसरतडितश्चारुनयना
यदक्षिक्षेपोऽन्तर्विशति हृदयं सूचिसचिवः ।
सुखादिग्धं मुग्धं विषमिव समुत्सृज्य विषयं
श्रयेऽहं पर्यन्तस्थितिपरिचितां शान्तितरुणीम् ॥ ३० ॥
संचिन्तयन्नित्यवनीशसूनुर्द्वारेषु रुद्धेषु निशान्तपालैः ।
दिव्यप्रभावाप्तगतिर्विचार्य विनिर्ययौ हर्म्यपथेन तूर्णम् ॥ ३१ ॥
स्वच्छन्दकाख्यं प्रविबोध्य सूतं हयं समारुह्य च कन्थकाख्यम् ।
व्योम्ना जवाद्द्वादशयोजनानि गत्वा वनं निर्जनमाससाद ॥ ३२ ॥
तत्रावरुह्याश्ववरात्प्रभाते केयूरहाराङ्गदकुण्डलानि ।
मुक्त्वा किरीटं च वितीर्य सर्वं सूताय सत्त्वाभरणस्तमूचे ॥ ३३ ॥
हंहो निवर्तस्व हयं गृहीत्वा गृहाण सर्वाणि विभूषणानि ।
एतैर्न किंचिन्मम कृत्यमस्ति भूभृत्कुले श्लिष्टविनष्टशिष्टैः ॥ ३४ ॥
एको वनेऽस्मिन्निति नैव कार्यस्त्वया मयि स्नेहमयोऽनुतापः ।
संजायते जन्मनि जन्तुरेकः प्रयाति चान्ते परलोकमेकः ॥ ३५ ॥
द्रुमश्छत्रं मित्रं सरलहृदयोऽयं मम मृगः
स्थली लीलाशय्या तनुतरतरुत्वङ्निवसनम् ।
स्वकोषः संतोषः कृपणकरुणैव प्रियतमा
न संसारः कश्चिद्भवति विभवेऽस्मिन्परिभवः ॥ ३६ ॥
उक्त्वेति सूतं क्षितिपालसूनुः स्वयं कृपाणेन निकृत्तजूटः ।
तमश्रुधारार्द्रपटं विसृज्य शृङ्गं गिरेरुन्नतमारुरोह ॥ ३७ ॥
पर्यङ्कबन्धेन सुखोपविष्टे समाधिसंनद्धविरुद्धचित्ते ।
तस्मिन्क्षणे विश्वगुरौ गिरीन्द्रः स भग्नशृङ्गः शकलीबभूव ॥ ३८ ॥
गिरीन्द्रभङ्गेन विविग्नवक्त्रं दृष्ट्वामरा व्योमचरास्तमूचुः ।
जगद्गुरुं त्वं गिरिरेष धर्तुं प्रभो [1]प्रसीदात्र शुभं न शक्तः ॥ ३९ ॥
ततः स निष्कम्पमवाप्य देशं वज्रासनाख्यं विकसद्विवेकः ।
अनुत्तरज्ञाननिधानमाप्तुं धीरः स्थिरध्यानधुरंधरोऽभूत् ॥ ४० ॥

१. 'प्रसीद कुशलं' क.

जात्यैव मारः शमनिश्चलानां वैराग्यवैरेण विकारकारी[1] ।
तस्येन्दुकान्त्येव कृताः समाधिभङ्गाय कान्ताः स समादिदेश ॥ ४१ ॥

कटाक्षैः कुर्वाणाः कुवलयकुलं कान्तिविकलं
सृजन्त्यः पादाब्जैः स्थलकमलमालामलिनताम् ।
दिशन्त्यः शीतांशोर्मुखरुचिभिरायासमसमं
ययुस्तास्तस्याग्रेर्धृतदृढसमाधेर्विफलताम् ॥ ४२ ॥

अथागतैर्दुःसहमारसैन्यैः शस्त्राश्म[2]वह्निद्रुमपांसुवर्षैः ।
क्षिप्तैरनल्पप्रकरैः कुमारः पुष्पैरिवाकीर्णतनुर्बभूव ॥ ४३ ॥

स्वयं समुत्सृष्टशरे स्मरेऽपि याते विलक्षे घनदैन्यसैन्ये ।
वज्रासनध्यानधृतिः स सम्यक्संबुद्धतां सर्वविदाससाद ॥ ४४ ॥

ब्रह्मप्रधानैस्त्रिदशैः प्रदत्तं पात्रं समादाय स चीवरं च ।
संसारमुक्त्यै सुरमर्त्यनागसंघस्य सद्धर्ममथादिदेश ॥ ४५ ॥

हयं समादाय चिरेण सूते शून्यासनं शाक्यपुरं[3] प्रविष्टे ।
जनस्य सान्तःपुरमण्डलस्य समुद्ययौ तीव्रविषादनादः ॥ ४६ ॥

महीपतिः पुत्रवियोगतप्तः प्रसुप्तजीवः क्षणमोहनिद्राम् ।
निद्रामिवासाद्य घनानुबन्धां निःस्पन्दवृत्तिर्न विवेद किंचित् ॥ ४७ ॥

अवाप्तसंज्ञं सुचिरात्तमूचुर्नभश्वरा मुञ्च विचार्य मोहम् ।
राजन्सुतस्ते सुगतत्वमाप्तः सुरासुरैर्वन्दितपादपद्मः ॥ ४८ ॥

ततः क्षितीशस्त्रिजगत्प्रसिद्धं ज्ञात्वापि तं जैनवने जिनेन्द्रम् ।
द्रष्टुं ययौ हर्षसुधानिधानं सामात्यमित्रस्वजनः ससैन्यः ॥ ४९ ॥

तदाश्रमोपान्तमहीमवाप्य वनं विलोक्य प्रशमाभिरामम् ।
शुद्धोदनः स्यन्दनपार्श्वसंस्थमुदायिनं बान्धवमित्युवाच ॥ ५० ॥

क्रव्यादोऽपि न भुञ्जते परतनुद्रोहेण हिंसाशनं
क्रूराणामपि वैरवह्निविरहान्न क्रोधदिग्धं मनः ।
व्यालुम्पन्ति न तु स्वयं निपतितादन्यत्फलं वानरा
निर्दोषावरणं वनं भगवतः शंभोः प्रसादादिदम् ॥ ५१ ॥

---

१. 'विकास' क. २. 'शस्त्रास्त्र' ख. ३. 'पुरीं' क.

अक्षोभनिर्भरजलाः सरितो वहन्ति
निर्विप्लवा विरजसः सुखयन्ति वाताः ।
सध्यानमौनमुनितां दधतीव वृक्षा
निश्चेतनेष्वपि बत प्रसृता प्रशान्तिः ॥ ९२ ॥

उक्त्वेति भूपरिवृढः शमसंनिधानं
प्राप्याश्रमाग्र(ग्र्य)मवरुह्य रथात्प्रहृष्टः ।
दूराद्ददर्श सुरसिद्धनरोरगाणां
रागादिदोषशमने सुगतं प्रवृत्तम् ॥ ९३ ॥

भूनिर्गतप्रततकाञ्चनपद्मपृष्ठ-
पद्मासनस्थमविसंस्थुलधामधीरम् ।
मेरुं सदेहमिव चन्द्रसहस्रकान्ति-
पूरैर्नवामृतचितैः कृतरूपकायम् ॥ ९४ ॥

सद्धर्मकायमुपदेशदिशा दिशन्तं
ज्ञानार्करश्मिहतमोहमहान्धकारम् ।
सिंहोन्नतांसयुगमुन्नतबाहुनेत्रं
बालप्रवालतरुपल्लवलोहितौष्ठम् ॥ ९५ ॥

लावण्यराशिवदनं सरलोरुनासं
निर्भूषणश्रवणपाशविशेषशोभम् ।
तं निर्जितसरमुदारगुणं प्रणम्य
लेभे प्रतिप्रणतिमानघनप्रमोदम् ॥ ९६ ॥

शक्रादिभिः सुरवरैरपि बिम्बसार-
मुख्यैश्च भूमिपतिभिर्गुरुगौरवेण ।
नागैश्च नम्रवदनैरभिनन्द्यमानः
शुद्धोदनः कनकविष्टरमाससाद ॥ ९७ ॥

१. 'निर्झर' ख-ग. २. 'महोरगाणां' क. ३. 'दिगन्त' ख. ४. 'लोहिताङ्गम्' ख. ५. 'गिरि' ख. ६. 'नम्रश्च' ख-ग.

आनन्दबन्धुमवलोक्य तथागतेन्दुं
चित्तप्रसादमसमं समवाप्य भूपः ।
तं प्राप्य हर्षसहजाश्रुनिरुद्धदृष्टि-
स्तद्दर्शनामृतरसे सुतरामतृप्तः ॥ ५८ ॥
देव प्रकामकरुणार्द्रदृशा सहर्ष-
निःशेषदोषरहिता विहिता त्रिलोकी ।
कस्मादहो निजजनस्य कृतस्त्वयायं
संमोहकृद्विरहशोकदशोपदेशः ॥ ५९ ॥
नीत्वा क्षपां स्फटिकहर्म्यतले सुखेन
शय्यासु चीनवसनद्युतिसस्मितासु ।
शेषे कथं हरिणसंहतिदन्तदष्ट-
शिष्टार्धशष्पपरुषासु वनस्थलीषु ॥ ६० ॥
तच्चन्द्रकान्तिमणिशुक्तिषु सक्तशैत्यं
पीत्वा पयः कथमहो पिबसि त्वमद्य ।
ग्रीष्मोष्ममूढमहिषद्विरदावगाह-
क्लिद्यत्करीषकलुषोदरतिक्तमम्भः ॥ ६१ ॥
कस्मादेष विहारतामुपगतः कण्ठः कठोरेण किं
संवीतं मृगचर्मणानिलचलच्चीर्नांशुकार्हं वपुः ।
किं ते रत्नकिरीटधाम्नि च जटाजूटो निबद्धादरः
क्रूरक्लेशसखी सुखेषु विमुखी केनोपदिष्टा स्थितिः ॥ ६२ ॥
इत्यार्जवाज्जनपतौ जनकाभिमाना-
त्पुत्रोचितं सदसि रागमयं ब्रुवाणे ।
स्नेहोपलिप्तरजसा मलिनस्वभावं
तं तापसंभवभिषग्भगवान्बभाषे ॥ ६३ ॥

---

१. 'देवः' ख-ग. २. 'सकला' क. ३. 'स्वच्छशीतं' ख-ग. ४. 'चीनांशुकं ते वपुः' ख-ग. ५. 'जटाजूटेन बद्धो भरः' क. ६. 'जनकाभिधानात्' ख-ग. ७. 'तद्दोषसंभव' ख-ग.

किं जीवावधिबन्धनैर्गुणगणे[1]नाराधितैर्बन्धुभि-
र्ये यान्त्यन्त्यदिने क्षणाश्रुपतनप्रत्यायनापात्रताम् ।
सद्धर्माधिगमः क्रियाव्युपरमः सत्संगमः संयमः
पर्यन्तेऽप्यचला विरक्तमनसामेते सतां बान्धवाः ॥ ६४ ॥

[2]आक्रुष्याटविकैः परैरपहृता सामन्तसीमान्तभू-
रीर्ष्यार्ता मरणोद्यता प्रियतमा मुख्यस्तुरङ्गो मृतः ।
मन्त्री द्रोहसमुद्यतोऽतिबलवानित्यात्तचिन्ताशतै-
र्भूपालः किल कोमलेऽपि शयने निद्रादरिद्रः सदा ॥ ६५ ॥

आशापाशनिवेशबन्धनपृथुग्रन्थिव्यथावर्जित-
स्तृष्णातापनिवृत्तिशीतलतनुर्मानावमानोज्झितः ।
रागद्वेषविषप्रशान्तिसुखितश्चिन्ताविहीने वने
पाषाणे घनदर्भसूचिनिचिते शेते सुखं निर्वृतः ॥ ६६ ॥

भोगी नित्यमजीर्णभोजनरुजा जिह्वां सदा दर्शय-
न्वैद्यं पृच्छति तद्भयादभिमतं नाश्नाति तृष्णातुरः ।
भुक्त्वा स्वल्पक[3]मप्रयत्नपतितं मूलं फलं वा जलं
पीत्वा [4]जातु रुजं जनेश भजते कांचिन्न निष्किञ्चनः ॥ ६७ ॥

शय्यास्तास्तनुतूलपेशलतलाः सा हेमहर्म्यस्थिति-
स्ताः केयूरकिरीटहा[5]ररचनास्ते कुञ्जरास्ते हयाः ।
भोगास्तेऽभिमता न कस्य सुखदाः किं त्वक्षिपक्ष्माञ्चल-
च्छेदे [6]सर्वमनन्त्य(गण्य)मन्यवशगं दृश्यं न किंचित्क्वचित् ॥ ६८ ॥

ग्रीष्मे हारतुषारचन्दनचयश्चीनांशुकं चन्द्रिका
[7]शीते राङ्कवकुङ्कुमाङ्कतरुणीपीनस्तनालिङ्गनम् ।
रात्रौ वेणुर[8]वोग्रवाररमणीगीतं दिने सत्सभा
यस्यैतत्क्रियते स कस्य नृपते कार्यः कृतघ्नः स्थिरः ॥ ६९ ॥

---

१. 'गणैः' ख-ग. २. 'आकृष्याटनिकैः परैरपहृता सा सा न' क. ३. 'अल्पयत्नपतितं' क. ४. 'जातु रुजं जनो न भजते किंचिन्न' ख-ग. ५. 'भार' ख-ग. ६. 'सर्वंगमन्यगण्यवशगं' ग. ७. 'ते मी' ख-ग. ८. 'रवाग्ररावरमणी' क.

नैराश्ये शमशीतचित्तसुखिनां नानन्दनं चन्दनं
कारुण्याभरणाभिरामहृदये हारेण भारेण किम् ।
रत्नालंकरणादिकं गुरुगिरामाकर्णनं कर्णयो-
र्नेष्टं [1]शीलदुकूलशीलनवतां चित्राम्बराडम्बरम् ॥ ७० ॥
राजन्संत्यज मोहदुर्ग्रहमिमं स्नेहव्यथां मा कृथाः
संसारस्य विचारय प्रचलतां मा मज्ज जन्मोम्बुधौ ।
नित्यापूर्व[2]जनोद्भवे भवपथे प्रस्थानपान्थभ्रम-
क्षिप्रालापसमागमप्रणयिनां को बान्धवः कः परः ॥ ७१ ॥
इत्युक्त्वा भगवान्नृपस्य विदधे [3]प्राबोधिनीं बोधनां
दीप्तज्ञाननिशातवज्रशिखया [4]कायाभिमानाभिधम् ।
भित्त्वा विंशतितुङ्गशृङ्गगहनं स्थूलाचलं याकरो-
त्संसारावरणप्रहाणकलनावैमल्यलीनं मनः ॥ ७२ ॥
शाक्यानामथ तत्र मैत्रमनसां सप्ताधिकाः कोटयः
सप्त प्राप्तविवेकपूर्वकुशलाश्चित्तप्रसादात्परम् ।
स्रोतःप्राप्तसकृत्समागमफला[5]न्यागामिकार्हत्पदा-
न्यापुः सर्व[6]जनाशयक्षयधिया सर्वज्ञसंदर्शनात् ॥ ७३ ॥
अथ स भगवान्कृत्वा सर्वं जगज्जिनभास्कर-
स्तिमिररहितं ज्ञानालोकैः क्रमाद्गुणिबान्धवः ।
जनकरुणया सद्धर्माख्यं [7]निधाय परं वपु-
स्तरणशरणं संसाराब्धावभूत्पुनरच्युतः ॥ ७४ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते दशावतारचरिते बुद्धावतारो नवमः ।

---

कल्क्यवतारो दशमः ।

अथ स्वं वैष्णवं धाम गते सुगतभास्वति ।
कलौ प्रबलतां याते तमसीव सुदुःसहे ॥ १ ॥

---

१. 'नीलदुगूल' ख-ग. २. 'जनूद्भवे' क. ३. 'प्राबेविकीं' ख-ग. ४. 'कायाभिधाना' ख-ग. ५. 'न्यागामिका तत्पदा' ख-ग. ६. 'जनाश्रम' क. ७. 'विधाय' ख-ग.

मर्त्यभूमिं परित्यज्य सदाचारविवर्जिताम्।
जग्मुः कलापिग्रामाख्यं दिव्यदेशं महर्षयः॥ २॥
अवदन्मुनयस्तत्र मार्कण्डेयं चिरायुषम्।
भगवन्कलिकालोऽयं कलुषः प्रत्युपस्थितः॥ ३॥
अतोऽपि कीदृक्पर्यन्ते मलिनत्वं प्रयास्यति।
जानीमहि(हे) नहि मही भारार्ता किं करिष्यति॥ ४॥
विप्रा मद्यघृतक्षीरलाक्षालवणविक्रयैः।
जीवन्ति प्रेष्यनिरता निराचारा निरग्नयः॥ ५॥
अश्रोत्रियाः क्रियाहीनाः श्रुतिस्मृतिविवर्जिताः।
विप्राः सुखेन मोक्षाप्त्यै याताः पाषण्डिशिष्यताम्॥ ६॥
वृषलीपतयः प्राप्ताः क्रीडाहासकतां द्विजाः।
नृत्तगीतकलाजालशिल्पिचारणवृत्तयः॥ ७॥
क्रोधलोभपराः क्रूरास्तमोमूढा द्विजातयः।
त्यजन्ति जीवितं रज्जुविषशस्त्रानलाश्मभिः॥ ८॥
अक्षत्रिया क्षितिः सर्वा क्षत्रसंज्ञाः क्षितीश्वराः।
ये रक्षितारः पौराणां ते प्राणधन[1]हारिणः॥ ९॥
प्रजोपतापशापोष्णैः पापाप्तैर्भूभुजां धनैः।
जलैः सलवणैः पीतैरिव तृष्णा प्र[2]वर्धते॥ १०॥
कृपणाक्रन्दबधिरा मदान्धा न्यायमौनिनः[3]।
भूपालाः कु[4]ब्जहृदया लोकपीडारताः सदा॥ ११॥
[5]अलक्ष्यं भक्षयन्त्येव क्षितीशानां दिवानिशम्।
समुद्रं कोषमखिलं कायस्था वडवाग्नयः॥ १२॥
गायनक्षपिता लक्ष्मीर्दस्युनिर्दलिता दिशः।
कायस्थदुःस्थिता पृथिवी राज्ञामज्ञावृताः सभाः॥ १३॥

---

१. 'वसु' ख-ग. २. 'प्रवर्तते' क. ३. 'मानिनः' ख-ग. ४. 'कुब्जवृत्तयः शत्रुसङ्ग्रामपुङ्गवाः' क; 'कुब्जहृदयाः······' ग. ५. एतत्पूर्वार्धं ख-ग-पुस्तकयोस्त्रुटितम्.

मन्त्रिसेनापतिद्वाःस्थसभापतिपुरोहितैः ।
[1]उत्कोचद्रविणोत्तानपाणिभिः क्षपिताः प्रजाः ॥ १४ ॥
[2]वैश्यस्य क्रौर्यवक्रत्वकार्कश्यैः क्रकचोपमाः ।
सरलच्छेदिनो वैश्या वैरस्मरणतत्पराः ॥ १५ ॥
निर्माल्यमलिनां जातिं वर्जयन्ति शनैः शनैः ।
[3]वैश्या विप्रविवाहेन ब्राह्मण्याभिनिवेशिनः ॥ १६ ॥
दृश्यते सरलः शङ्खः फणी च विषवर्जितः ।
कृतान्तः करुणार्तो वा न तु वैश्यः कदाचन ॥ १७ ॥
[4]जीव्यते कालकूटेन जीव्यते खदिराग्निना ।
जीव्यते संनिपातेन न तु वैश्येन वैरिणा ॥ १८ ॥
निशिताः सविषा वैश्या रोषनिर्घेषधूमिनः ।
दृश्यन्ते कलिकालस्य कठिना दशना इव ॥ १९ ॥
शूद्राः क्षत्रियतां याता वैश्यतामपरे श्रिताः ।
[5]विप्रार्हा गुरुतामन्ये होतारो ब्रह्मवादिनः ॥ २० ॥
श्राद्धेषु शूद्राः शूद्राणां भुञ्जते गुरुतापसाः ।
ब्रह्मस्वदारहरणे प्रवृत्ताश्च महीभुजः ॥ २१ ॥
शूद्रस्य ब्राह्मणो दासः शिष्यश्च चरणच्युतः ।
भूमिश्च ब्रह्मदेयाख्या प्रवृत्तमधरोत्तरम् ॥ २२ ॥
इत्येष चातुर्वर्ण्यस्य जातः कलिविपर्ययः ।
प्रतिलोमेन दृश्यन्ते प्रजानां वर्णसंकराः ॥ २३ ॥
ब्रह्मचर्यमतिक्रान्तं [6]गृहिणो वेश्ययोषिताः ।
[7]वानप्रस्थस्थितिर्नास्ति यतीनां संयतिः कुतः ॥ २४ ॥
उक्तं स्वयं भगवता गिरिशेन शास्त्रं
यद्वेदविद्भिरधिगम्य[8]मशेषविद्यैः ।

---

१. 'तत्कोश' ख-ग. २ 'वैश्यस्य' ख-ग. ३. एतदुत्तरार्धं ख-ग-पुस्तकयोस्त्रुटितम्. ४. ख-ग पुस्तकयोः सर्वत्र 'जीवते' इति पाठः. ५. 'विप्रार्हगुरुतां' ख-ग. ६. 'गृहिणां शेषयोषितः' ख-ग. ७. 'वानप्रस्थातिथिः' ख-ग. ८. 'अधीतवेदैः' ख.

तन्मे(?) प्रमूर्खगुरवः प्रविहाय कष्टं
कुर्वन्ति कल्यकुरवै(?)रुपदेशचर्चाम् ॥ २५ ॥
चक्रस्थितौ रजकवायकचर्मकार-
कापालिकप्रमुखशिल्पिभिरेकपात्रे ।
पानेन मुक्तिमविकल्परतोत्सवेन
वृत्तेन चोत्सववता गुरवो वदन्ति ॥ २६ ॥
लब्धं निर्मलमोक्षधाम मुनिभिर्भृग्वङ्गिरःकश्यपा-
गस्त्यात्रेयमुखैर्युगैरपि न यत्तत्प्राप्तमेवाबुधाः ।
मन्यन्ते खलु कौलगोलगुरुभिर्ग्रस्तार्थधाराः क्षणा-
दुच्छिष्टार्पणवेदधूननकथामात्रेण निर्यन्त्रणाः ॥ २७ ॥
दम्भः सर्वस्य लोभान्निरवधिरधिकक्रोधकामस्तपस्वी
द्रष्टा मूढः सभायां वणिगतिधनतामल्पकालेन यातः ।
वैद्यः कायोपजीवी गृहपतिरदयः क्रूरकर्माधिकारी
बन्धुर्दारापहारी नवकलिकलिकाकोमलश्रेणिरेषा ॥ २८ ॥
श्मशानव्रततापसार्पितचिताभस्मास्थिचूर्णादिभिः
सूनाबद्धपशूपमं निजपतिं निःशङ्कशून्याशयम् ।
कृत्वा गर्वगृहीतगेहविभवाः प्रागल्भ्यलब्धोदयाः
स्वातन्त्र्येण चरन्ति शीलविरहव्यापारधीराः स्त्रियः ॥ २९ ॥
इत्येष विपुलः कालः कलेः प्रबलतां गतः ।
भगवन्कीदृशः प्रान्ते भविता भविता जनः ॥ ३० ॥
श्रुत्वैतदुक्तं मुनिभिर्देवर्षिस्तानभाषत ।
यास्यत्यतोऽपि मालिन्यं सहस्रगुणतां कलेः ॥ ३१ ॥
कलिविषतरोः प्रातः प्रातर्धनप्रसरः परं
नवनवभरः पाके पाके प्रमोहकृदुत्कटः ।

१. 'कुदुरैः' ख; 'कुरुैः' ग. २. 'मुक्तिः' ख. ३. 'नृत्तेन चोत्पलवता' ख-ग. ४. 'गुरुभिः' ख. ५. 'मानापहारी' ख-ग. ६. 'स्नाना' ख-ग. ७. 'शूद्राशयं' ख-ग. ८. 'कालः' ख-ग.

अतिबहलतां पापामोदः प्रयाति सुदुःसहः
पततिं जनता येनाधोधः कृतेव पदेपदे ॥ ३२ ॥
सप्तवर्षासु नारीषु पुरुषा दशवत्सराः ।
तनयाञ्जनयिष्यन्ति ह्रस्वाः स्वल्पबलायुषः ॥ ३३ ॥
दरत्तुरुष्कयवनाव(फ)गानशकनन्दनैः ।
संकोचमेष्यति मही कुष्ठैरिव विसर्पिभिः ॥ ३४ ॥
म्लेच्छाच्छादितसर्वाशा कृपणाक्रन्दनादिनी ।
मेदःकर्दमिनी क्लेदं रक्तैर्यास्यति मेदिनी ॥ ३५ ॥
तस्मिन्काले निरालोके लोके पापतमोदये ।
उत्पत्स्यतेऽर्कसंकाशः शिशुः कर्किकुले द्विजः ॥ ३६ ॥
विष्णुर्भूभारशान्त्यर्थी सोऽथ विष्णुयशाः क्षितौ ।
चरिष्यत्यश्वमारुह्य म्लेच्छसंक्षयदीक्षितः ॥ ३७ ॥
तत्खड्गाघातकृत्तच्युतभुजशिरसां म्लेच्छयूथाधिपानां
रक्तैः प्रक्षाल्य लीनं कलिकलुषजनासङ्गसंक्रान्तपापम् ।
कङ्कालाङ्का कपालव्यतिकरशबला व्यावलत्केशकन्था
त्यक्ष्यत्यन्तेऽनुतापं व्रतमिव दधती भूतभृद्भूतधात्री ॥ ३८ ॥
निर्म्लेच्छां वसुधां विधाय सकलां देवः स्वयं माधवः
फुल्लाशोकदलोज्ज्वलां कृतयुगाविर्भावभव्यां विभुः ।
लोकानां कुशलोदयाय दशभिः स्वेच्छावतारक्रमै-
र्धर्माधानधिया करिष्यति पुनर्भारावतारं भुवः ॥ ३९ ॥
श्रुत्वेति देवर्षिगिरं यथार्थां तथेति निश्चित्य महर्षयस्ते ।
विष्णोः क्षितौ कर्किकुलावतारनिवेशिताशाः सुखिनो बभूवुः ॥ ४० ॥
इत्येष विष्णोरवतारमूर्तेः कथामृतास्वादविशेषभक्त्या ।
श्रीव्यासदासान्यतमाभिधेन क्षेमेन्द्रनाम्ना विहितः स्तवाग्र्यः ॥ ४१ ॥
इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते दशावतारचरिते कर्क्यवतारो दशमः ।

---

१. 'बालकान्' क. २. 'ह्रस्व' क. ३. 'वन्दनैः' क. ४. 'शापपापतमोमये' ख-ग. ५. 'कर्किकुले द्विजः शिशुः' क. ६. 'उत्खड्गाघात' ख-ग. ७. 'प्रत्यक्षन्ती न तापं' ख-ग. ८. 'धर्मादान' ख-ग. ९. 'भिधानक्षेमेन्द्र' ख-ग.

यो मत्स्यकूर्मादिविचित्ररूपैराश्चर्यकारी हृदयस्थरत्नः[1] ।
श्रीमाननन्तः स्फुटशङ्खचक्रः श्रियेऽस्तु विष्णुर्विभवोदधिर्वः ॥ १ ॥

कश्मीरेषु बभूव सिन्दुरधिकः सिन्धोश्च निम्नाशयः
प्राप्तस्तस्य गुणप्रकर्षयशसा पुत्रः प्रकाशेन्द्रताम् ।
विप्रेन्द्रप्रतिपादितान्नधनभूगोसंघकृष्णाजिनैः
प्रख्यातः[2]तिशयस्य तस्य तनयः क्षेमेन्द्रनामाभवत् ॥ २ ॥

तेन श्रीत्रिपुरेशशैलशिखरे विश्रान्तिसंतोषिणा
विष्णोः स्वल्पविलोकिताकृ[3]तिसुधासंवर्धितोत्कण्ठया ।
वाक्पुष्पैरमलैर्गुणप्रणिहितैरम्लानशोभैः स्थिरै-
र्भक्तिव्यक्तदशावतारसरसः पूजाप्रबन्धः कृतः ॥ ३ ॥

स्तुतिसंकीर्तनाद्विष्णोर्विपुलं यन्मयार्जितम् ।
तेनास्तु सर्वलोकानां कल्याणकुशलोदयः ॥ ४ ॥

ऐकाधिकेऽब्दे[4] विहितश्चत्वारिंशे सकार्तिके ।
राज्ये कैलशभूभर्तुः[5] कश्मीरेष्वच्युतस्तवः ॥ ५ ॥

समाप्तोऽयं ग्रन्थः ।

---

१. 'रत्नैः' ख-ग. २. 'शक्ति' ख-ग. ३. 'कृत' ख-ग. ४. एकचत्वारिंशन्मिते लौकिकाब्दे १०६६ मिते ख्रिस्ताब्द इत्यर्थः. ५. अनन्तदेवसूनोर्हर्षदेवपितुः.

KÂVYAMÂLÂ 27.

# THE JÎVÂNANDANA

OF

# ÂNANDARÂYA MAKHÎ.

EDITED BY

PANḌIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆḌURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1891.

*Price* 12 *Annas.*

काव्यमाला. २७.

आनन्दरायमखिप्रणीतं

# जीवानन्दनम्।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितम्।



तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम्।

१८९१



मूल्यं १२ आणकाः।

# काव्यमाला।

## श्रीमदानन्दरायमखिप्रणीतं

## जीवानन्दनम्।

प्रथमोऽङ्कः।

लक्ष्मीकैरवबन्धुकल्पकतरूंल्लब्ध्वाथ लब्धेप्सिते
भूयो मथ्नति देवदानवगणे दुग्धाब्धिमृद्धश्रमे।
तस्यानन्दथुना समं समुदयन्कुम्भं सुधापूरितं
बिभ्राणः स्वकरे करोतु भवतां भद्राणि धन्वन्तरिः॥ १॥

अपि च।

प्राग्जन्मीयतपःफलं तनुभृतां प्राप्येत मानुष्यकं
तच्च प्राप्तवता किमन्यदुचितं प्राप्तुं त्रिवर्गं विना।
तत्प्राप्तेरपि साधनं प्रथमतो देहो रुजावर्जित-
स्तेनारोग्यमभीप्सितं दिशतु वो देवः पशूनां पतिः॥ २॥

(नान्द्यन्ते)

**सूत्रधारः**—मारिष, इतस्तावत्।

(प्रविश्य)

**पारिपार्श्वकः**—भाव, एषोऽस्मि।

**सूत्रधारः**—

रीतिः सुखपदन्यासा शारदीया विजृम्भते।
पूर्णचन्द्रोदयश्चायं निहन्ति ध्वान्तमामयम्॥ ३॥

अपि च।

क्रममाणेषु दिगन्ते जलधरजालेषु शङ्खधवलेषु।
शान्तिमुपयाति सहसा कालुष्यदशा भृशं पयसाम्॥ ४॥

**पारिपार्श्वकः**—अतः किमाचरितव्यम्।

**सूत्रधारः**—शृणु तावत्। अत्र तञ्जापुरे पौरजानपदा देशान्तरादागताश्च बृहदीश्वररथोत्सवदिदृक्षया संघीभूताः।

सरसकवितानाम्नो हेम्नः कषोपलतां गता
विहरणभुवः षड्दर्शन्या विवेकधनाकराः।
विदधति तपोलभ्याः सभ्या इमे मम कौतुकं
तदिह हृदयं नाट्येनैतानुपासितुमीहते ॥ ५ ॥

**पारिपार्श्वकः**—(सशिरःकम्पम्।) कं पुनः प्रबन्धमवलम्ब्य।

**सूत्रधारः**—नन्वस्ति मम वशे सहृदयजनहृदयचन्दनं जीवानन्दनं नाम नवीनं नाटकमिति।

**पारिपार्श्वकः**—कस्तस्य प्रबन्धस्य कविः।

**सूत्रधारः**—विद्वत्कविकल्पतरुरानन्दरायमखी। य एष इह

गुरुदेवद्विजभक्तो नैमित्तिकनित्यकाम्यकर्मपरः।
दीनजनाधीनदयो विहरति समरे च विक्रमार्क इव ॥ ६ ॥

यः स्नातोऽजनि दिव्यसिन्धुसलिले यः स्वात्मविद्याश्रितो
येनाकारि सहस्रदक्षिणमखो यः सद्भिराश्रीयते।
सोऽयं त्र्यम्बकराययज्वतिलको विद्वत्कवीनां प्रभो-
र्यत्तातस्य नृसिंहरायमखिनस्तुल्यप्रभावोऽनुजः ॥ ७ ॥

**पारिपार्श्वकः**—(सबहुमानम्।) आः, ज्ञायत एवायम्। किं त्वस्य सर्वलोकविदिता अप्येते गुणाः प्रबन्धनिर्वाहधूर्वहत्वमवबोधयितुं नेशते। यतः।

आराध्नोति यदेष भक्तिभरितो देवान्द्विजातीन्गुरू-
न्यच्च श्रद्दधदातनोति समये नित्यादिकर्मत्रिकम्।
यद्दीनेषु दयां करोति समरे शौर्यं यदालम्बते
तत्सर्वं नरसिंहयज्वसुततालाभस्य लीलायितम् ॥ ८ ॥

इदं तु श्रोतव्यम्।

आनन्दरायमखिनो वाल्मीकेरिव योगिनः।
इतरापेक्षणात्सारः स्वतः सारस्वतोदयः ॥ ९ ॥

**सूत्रधारः**—(विहस्य ।) मारिष, त्वं न जानासि यत एवं ब्रवीषि । शृणु तावत् ।

आबाल्यादपि पोषितोऽजनि मया प्रेम्णा तथा लालित-
स्तेनासौ सरसामुपैतु कवितामानन्दरायाध्वरी ।
इत्येकक्षितिपालवंशजलधेर्देव्या गिरां जातया
श्रीशाहावनिनायकाकृतिभृता नूनं प्रसादः कृतः ॥ १० ॥

अत एव

कवीनां पूर्वेषां कथमपि च चित्तैरवहितै-
र्गृहीता या नासीत्सरसकवितासारपदवी ।
असौ तामाक्रामन्हरति नरसिंहाध्वरिकुल-
प्रदीपः सूरीणां श्रवणयुगजाड्यान्धतमसम् ॥ ११ ॥

**पारिपार्श्वकः**—श्रीशाहराज इति नाम दधत्याः सरस्वत्याः कियानानन्दरायमखिनि दयाविशेषः । यतः ।

पुष्यत्कौतुकपद्मसंभृतकरद्वन्द्वाङ्गुलीवेल्लन-
द्राङ्क्ष्णिपीडितचन्द्रमण्डलगलत्पीयूषधारासखैः ।
वाग्गुम्फैर्बलवैरिधारितशचीधम्मिल्लमल्लीसर-
स्फारामोदमदापहैश्च कवयत्यानन्दरायाध्वरी ॥ १२ ॥

युक्तमुक्तं च भावेन 'शाहभूपतिरूपेण गिरां देवी जाता' इति । कथमन्यथानन्यसाधारणमस्य प्रागल्भ्यम् । तदिदानीमिदमुत्प्रेक्ष्यते—

भर्तुं लालयितुं भुवि प्रथयितुं विद्वज्जनानाश्रिता-
न्श्रीशाहक्षितिपात्मना क्षितिगतां मत्वा गिरां देवताम् ।
आसिञ्चन्नसकृत्कमण्डलुजलैरङ्गानि पर्याकुलो
धाता वाहनहंसपक्षपवनैस्तापं किलापोहति ॥ १३ ॥

**सूत्रधारः**—तन्नियोजय भूमिपरिग्रहायासद्वर्ग्यं शैलूषगणम् ।

**पारिपार्श्वकः**—बाढम् । किं तु सन्ति कथानायकस्य जीवस्य परिजना विज्ञानशर्मप्रभृतयः प्रतिनायकस्य च यक्ष्मणः परिजनाः पाण्डुश्वासकासज्वरगुल्मातिसारप्रभृतयः । तेषां यद्यपि भूमिकाग्रहणपटवो नटबटवः

पुण्डरीककेयूरकमयूरकसारङ्गकतरङ्गकप्रभृतयः संनह्यन्ति । तथापि प्रयोगस्य बहुत्वेन दुरवगाहतया कथमभीप्सितार्थसिद्धिर्भविष्यतीति विचारेण व्याकुष्यत इव मे हृदयम् ।

**सूत्रधारः**—यत्किंचिदेतत् । महतामेषां सामाजिकानामनुग्रह एवास्माकमभीप्सितमर्थं समग्रयिष्यति । यतः ।

जाड्यं भिनत्ति जनयत्यधिकं पटुत्वं
सार्वज्ञमावहति संमदमातनोति ।
विद्वेषिवर्गविजयाय धृतिं विधत्ते
किं किं करोति न महद्भजनं जनस्य ॥ १४ ॥

**पारिपार्श्वकः**—एवं च मन्ये त्वया सह स्पर्धमानोऽपि विकटनामा नटबटुरभिनयविद्यायां महदनुग्रहात्त्वयैव विजेष्यत इति ।

**सूत्रधारः**—विकटो नाम नटबटुर्मया सह स्पर्धत इत्यतत्त्वविदो वचनम् । शृणु तावत् ।

अभिनयविद्याविषये दुरहंकाराकुलीकृतो विकटः ।
स नटबटुर्मां वाञ्छन्त्यभिभवितुं जीवमिव यक्ष्मा ॥ १५ ॥

(नेपथ्ये)

अरे रे शैलूषापसद, 'अभिभवितुं जीवमिव यक्ष्मा' इति किमसंभावितमर्थं दृष्टान्तयसि ।

मयि जीवति जीवस्य स्वामिनो मन्त्रिणि प्रिये ।
दुर्बलो यक्ष्महतकः कथं वाभिबुभूषति ॥ १६ ॥

**सूत्रधारः**—(आकर्ण्य ।) मारिष, जीवराजमन्त्रिणो विज्ञानशर्मणो भूमिकामादाय मम कनीयान्कलहंसो रङ्गभुवमवतरति । तदावामप्यनन्तरकरणीयाय सज्जीभवावः ।

(इति निष्क्रान्तौ ।)

प्रस्तावना ।

---

(ततः प्रविशति जीवमन्त्री विज्ञानशर्मा ।)

**विज्ञानशर्मा**—('अरेरे शैलूषापसद–' इत्यादि पठित्वा विचिन्त्य ।) सर्वथा राजसमीपं गत्वा तदनुज्ञया यक्ष्मणः प्रवृत्तिमुपलब्धुं चारान्प्रेषयिष्यामि । अथवा 'तत्प्रवृत्त्युपलम्भाय प्रेषय धारणाम्' इति मयोक्तो राजा तथा कुर्यात् । (श्रुतिमभिनीय ।)

दिक्षूदञ्चति ताम्रचूडरसितं यद्ध्रस्वदीर्घप्लुत-
प्रायोवर्णनिभं ब्रवीति तदिदं व्युष्टा निशाभूदिति ।
स्त्रीणां निर्गमनं विहृत्य पतिभिर्ब्रूते विनैवाक्षरैः
क्रीडावेश्मकपाटिकाविघटनक्रेंकारपारम्परी ॥ १७ ॥

तदिदानीं देव्या प्रसन्नया बुद्ध्या सह राजा प्रतिबुध्य निवसेत् । तदुपसर्पामि । (इति पुरो दृष्टिक्षेपमभिनयन् ।)

चञ्चत्खेटकृपाणकञ्चुकशिरस्त्राकल्पदृप्यद्भटा
सादिव्यञ्जितवक्रमण्डलगतित्वङ्गत्तुरङ्गव्रजा ।
गण्डद्वन्द्वगलन्मदाम्बुमुखरीभूतद्विरेफद्विपा
दृष्टचोर्मे कुतुकाय राजभवनद्वारोपकण्ठस्थली ॥ १८ ॥

अपि च ।

प्रौढामात्यनिरुक्तमन्त्रपदवीविस्रम्भसंचारिणो
राज्ञो दुःसहतेजसो निशमने यद्वद्धृतिं द्वेषिणः ।
प्रासादप्रतिहारवेदिषु तथा स्नेहाङ्कपात्रस्थिताः
प्रत्यूषोपगमे प्रदीपमुकुलाः कान्तिं त्यजन्त्यञ्जसा ॥ १९ ॥

(पुरो विलोक्य ।) का पुनरियं तपश्चरणजनितप्रभुत्वगौरवेव मामभिवर्तते ।

गाढोन्नद्धजटाकलापकपिलश्रीधूतबालातपा
बिभ्राणा भसितानुलेपधवलच्छायां तनुं पावनीम् ।
भिक्षापात्रमयूरपिच्छचयभृत्पाणिद्वया मेऽधुना
काषायाम्बरधारिणी कलयति स्वान्ते धृतिं तापसी ॥ २० ॥

(निपुणं निरूप्य ।)

अस्यामक्षिभ्रुवं नासा रदपङ्क्ती रदच्छदः ।
चुबुकं मन्दहासश्च धारणायामिवेक्ष्यते ॥ २१ ॥

(ततः प्रविशति तापसीवेषा धारणा ।)

**धारणा**—अहं खु पच्चत्थिराआभिसेणणसंणाहं कस्स वि पुरिसस्स मुहादो सुदवन्तेण रण्णा 'इमं उत्तन्तं पुरं पविसिअ जाणीहि' त्ति पेसिदह्मि । मए वि तावसीवेसाए तह जाणिअ रण्णो समीवे समागमीअदि । (अग्रतो दत्तदृष्टिः स्वगतम् ।) एसो विण्णाणसम्मा अमच्चो आअच्छदि । होदु । वेसेण पदारेमि णम् । जज्जवि सव्वस्सिं वि कज्जे इमस्स अणुमदिं विणा राआ ण पवट्टइ तह वि जं मह संसओ वट्टइ ता एअकस्स पआसो ण भवे । (इति परिक्रामति ।) (क)

**मन्त्री**—(दृष्ट्वा स्वगतम् ।) इयं तापसी राजप्रहिता प्रच्छन्ना किं धारणा भवेत् । भवतु । पृच्छामि । (प्रकाशम् ।) अये तापसि, का त्वम् । कुत आगच्छसि ।

**धारणा**—(स्वगतम् ।) इमस्स पडिवअणं भासन्तरेण भणेमि । अण्णहा कंहं वि जाणिस्सदि इअं सेति । (प्रकाशम् ।) अहं खलु गार्गी यक्ष्मणो राज्ञो वयस्या देव्या गृहिण्याः स्नेहसर्वस्वभाजनं तदन्तःपुरादेवागच्छामि । (ख)

**मन्त्री**—(स्वगतम् ।) भवेदेवेयं धारणा तापसीवेषेण रिपुप्रवृत्तिमुपलभ्यागतवती । अयं स्वनामानुगुणमभिज्ञो वा न वेति मां परीक्षितुं संस्कृत-

---

(क) अहं खलु प्रत्यर्थिराजाभिषेणनसंनाहं कस्यापि पुरुषस्य मुखाच्छ्रुतवता राज्ञा 'इमं वृत्तान्तं पुरं प्रविश्य जानीहि' इति प्रेषितास्मि । मयापि तापसीवेषया तथा ज्ञात्वा राज्ञः समीपे समागम्यते । एष विज्ञानशर्मा अमात्य आगच्छति । भवतु । वेषेण प्रतारयाम्येनम् । यद्यपि सर्वस्मिन्नपि कार्येऽस्यानुमतिं विना राजा न प्रवर्तते तथापि यन्मम संशयो वर्तते तदेककस्य प्रकाशो न भवेत् ।

(ख) अस्य प्रतिवचनं भाषान्तरेण भणामि । अन्यथा कथमपि ज्ञास्यति इयं सेति ।

भाषया वेषानुगुणमपलपते प्रतिपक्षकुले च पक्षपातमात्मनः सूचयति । भवतु । अहमप्यजानन्निवानुनयन्पृच्छाम्येनाम् । (प्रकाशम् ।) अये तापसि,

निखिलं जगतश्चरितं विज्ञातं ते समाधिनैव भवेत् ।
तन्मे महाप्रभावा भाग्येनासादिता भवती ॥ २२ ॥

**धारणा**—(स्वगतम् ।) मं तावसिं एव्व जाणिअ मह मुहादो पच्चत्थिराअप्पउत्तिं सुणिदुं अणुणअप्पआरो एसो । होदु । अहं वि अजाणन्तीव पुच्छामि । (प्रकाशम् ।) कस्त्वम् । क्व गच्छसि । सूनृतेन ते वचनेन साधुर्भवानिति पृच्छामि । (क)

**मन्त्री**—(स्वगतम् ।) इयमात्मानं गोपयति । अहमपि तथैवोत्तरयामि । (प्रकाशम् ।) कार्यविशेषेऽधिकृतं जानीहि येनैवमधिकृतस्तन्निकटे गच्छामि ।

**धारणा**—(स्वगतम् ।) एसा विपक्खजणपक्खवादिणित्ति गोपणप्पआरो एसो । (प्रकाशम् ।) केनाधिकृतोऽसि । (ख)

**मन्त्री**—भगवति, त्वमेव जानासि । यतः प्रणिधानेन योगिनः सकलमपि प्रत्यक्षयन्ति ।

**धारणा**—(स्वगतम् ।) कहं एदं आपडिदम् । होदु । जोइणो विअ आसिअं करिअ अमच्चं वञ्चेमि । (इति ध्यानारूढा तिष्ठति ।) (ग)

**मन्त्री**—(स्वगतम् ।) एषा खलु

कृत्वा स्वस्तिकमासनं करयुगं विन्यस्य जानुद्वये
नासाग्रार्पिततारका नतमृजूकृत्यावलग्नं दृढम् ।
निःश्वासोच्छ्वसितोपरोधघटितस्तैमित्यपीनस्तनी
चित्ते मे कृतसंयमेव कुरुते धूर्ता महत्कौतुकम् ॥ २३ ॥

(प्रकाशम् ।) परिनिष्ठितं योगाभासनं भवत्याः ।

---

(क) मां तापसीमेव ज्ञात्वा मम मुखात्प्रत्यर्थिराजप्रवृत्तिं श्रोतुमनुनयप्रकार एषः । भवतु । अहमप्यजानतीव पृच्छामि ।

(ख) एषा विपक्षजनपक्षपातिनीति गोपनप्रकार एषः ।

(ग) कथमेतदापतितम् । भवतु । योगिन इवासिकां कृत्वा अमात्यं वञ्चयामि ।

**धारणा**—(ध्यानाद्विरम्य सस्मितम् ।) जीवस्य राज्ञो मन्त्री विज्ञानशर्मा भवान् ।

**मन्त्री**—महाप्रभावा योगसिद्धिमती भवती । तथाहि ।

बुद्ध्या महत्या कृतसाहचर्या देवे निजे दर्शितभूरिभक्तिः ।
परप्रवृत्तिं विदती महिम्ना साधारणा त्वं त्वहिते हिते च ॥ २४ ॥

**धारणा**—(स्वगतम् ।) किं जाणिदं म्हि अमच्चेण जहत्थणामधेएण जं तावसीवण्णणव्वाजेण अहं जेव्व वण्णिदा । होदु । एव्वं भणामि । (प्रकाशम् ।) महान्खलु योगप्रभावः । (क)

**मन्त्री**—भगवति, तव न किंचित्प्राणिनामन्तर्गतमविदितमस्ति । अतस्त्वां प्रार्थये । कथमस्माकं राजनि यक्ष्मा मन्यते । योगिन्यास्तव दुःखितेषु कथमेषां दुःखविमुक्तिः स्यादिति चित्तपरिकर्मविशेषः करुणा भवत्येव । योगाङ्गेषु यमेषु वाङ्मनसयोर्यथार्थत्वरूपः सत्यं नाम द्वितीयो यमोऽपि तथा । अत इदं निर्विशङ्कं प्रार्थनापूर्वं पृष्टासि ।

**धारणा**—(स्वगतम् ।) जक्खराजपक्खवादविसेसे वि जोइणीए पुच्छिदस्स जहत्थुत्तरं अभणिअ असक्कं ठादुं त्ति मण्णइ अमच्चो । (प्रकाशम् ।) किमन्यत् । पुरान्निष्क्रमयितव्योऽयमिति मन्यते । (ख)

**मन्त्री**—कथमेतदेतस्य संघटते सामादिषु चतुर्षूपायेष्वेकैकस्यापि प्रयोगेण सुसाधो हि रिपुमनोरथभङ्गः ।

**धारणा**—नन्विमं दुष्करं पश्यामि ।

यक्ष्मणि विभौ प्रयोगं घटयन्ति न सामभेददानानि ।
दण्डः प्रभवेन्नु कथं प्रबलतरे रिपुजने स्वसात् ॥ २५ ॥

**मन्त्री**—यथार्थमाह भवती । किं त्विदं पक्षपातवचनम् । केनेममस्मत्प्रबलतरं मन्यसे ।

---

(क) किं ज्ञातास्म्यमात्येन यथार्थनामधेयेन यत्तापसीवर्णनव्याजेनाहमेव वर्णिता । भवतु । एवं भणामि ।

(ख) यक्ष्मराजपक्षपातविशेषेऽपि योगिन्या पृष्टस्य यथार्थोत्तरमभणित्वा न शक्यं स्थातुमिति मन्यतेऽमात्यः ।

**धारणा**—(स्वगतम् ।) एसो अत्तकेरअस्स पहुणो अमच्चो । ता पहुजअविषअणीए मन्तविचारसिद्धीए परपक्खबलट्ठिदिं एदस्स जेव्व कहइस्सम् ।(क) (प्रकाशम् ।) सर्वरोगराजो यक्ष्मा निष्प्रतीकार इति सर्वजनविदितमेतत् । शृणु तावत् । परीवारा एतस्य रोगविशेषा भीमरूपा बहवः । तथाहि ।

ज्वरपाण्डुप्रमेहार्शः शूलगुल्मभगंदराः ।
कासश्वासावतीसारसंनिपाताश्मरीव्रणाः ॥ २६ ॥

किं च ।

रोगा मूर्ध्नि शतं चतुर्नवतिरेवाक्ष्णोस्तथा नासिकां
प्रत्याष्टादश कर्णयोरपि तथा वक्त्रे चतुःसप्ततिः ।
पञ्चैवं हृदि किं च सन्ति बहवः सर्वेऽप्यमी दुस्तराः
प्राप्तौ कल्ककषायलेह्यवटकप्रायौषधानामपि ॥ २७ ॥

तस्माद्दुर्जयो युष्माभिः ।

**मन्त्री**—(स्वगतम् ।) इयं किल भीत्या निसर्गकातरा प्रबलपरबलप्रवेशहृदया मदीयप्रभावमजानती स्वबुद्ध्यनुरूपं किमपि प्रलपति । भवतु । किमनया वृथा संवादकदर्थनया । प्रस्तुतकार्यसाधनार्थमिमां तावदन्तरयामि । (प्रकाशं सोपहासम् ।)

आलोक्य शात्रवबलं बहुधारणे त्वं
भीतासि संप्रति रसं प्रतिपन्नधैर्या ।
जीवस्य जीवितसमे मयि सत्यमात्ये
भूयात्कथं बत विरोधिशिरोधिरोहः ॥ २८ ॥

**धारणा**—(विहस्य ।) कधं जाणिदह्मि अमच्चेण । ता कहेमि विस्सद्धं जहत्थं सुणादु अमच्चो । अहं खु देईए बुद्धीए सहअरी रण्णा जीवेण तावसीवेसं करिअ रत्तिम्मि पुरं पविसिअ जक्खराअस्स विआरणीओ व-

---

(क) एष आत्मीयस्य प्रभोरमात्यः । तत्प्रभुजनविषयिण्या मन्त्रविचारसिद्धेः परपक्षबलस्थितिमेतस्यैव कथयिष्यामि ।

वसाओ त्ति पेसिदह्मि । तह ज्जेव विचारिअ अज्जं पदारेदुं पच्छण्णे व ठिदह्मि । (क)

**मन्त्री**—युज्यत एतत् । अतो राजसमीपमेव गच्छावः ।

**धारणा**—तुमं जेव्व गदुअ इमं वुत्तन्तं भणाहि । रण्णो णिवेदणादो वि तुह पुरदो कज्जणिवेदणं अब्भहिदम् । अहं उण दुज्जणसंसग्गकिदं कलुसं पक्खालेदुं महाणदिं ण्हादुं गच्छेमि । (ख) (इति निष्क्रान्ता ।)

**मन्त्री**—(सविचारम् ।) यद्यपि कुटिलप्रकृतयः स्वामिनि निबद्धदृढभक्तयो दुर्जया एव परसैनिकास्तथापि किमसाध्यं बुद्धिविभवस्य । यतः ।

दुर्जाते सुमहत्यपि क्षितिपतेः शालीनतां संत्यज-
　न्शत्रूञ्जेतुमथेप्सितं घटयितुं शक्नोत्युपायेन यः ।
प्रायो मन्त्रिपदं महोन्नतमतिः प्राप्तुं स एवार्हति
　स्वोत्सेकी न तु पण्डितो भुवि जनो वाचा वदन्पौरुषम् ॥ २९ ॥

अत इदानीम् ।

संचिन्तयामि कंचन संप्रति समयोचितं जयोपायम् ।
येनास्माकं श्रेयो भविता सहसा पराजयो द्विषताम् ॥ ३० ॥

(इति ध्यानं नाटयन् ।) आः, चिन्तितोऽयमबाधितोपायः । तथाहि ।

प्रथन्ते यास्तिस्रः प्रबलजडतीक्ष्णाः प्रकृतयो
　वशीकारे तासां जगति सदुपायाः परममी ।
क्रमात्स्नेहास्ते ते कुशलमतिभिः सद्भिरुदिता-
　स्तथा तीक्ष्णोपाया नियतमुपचाराश्च मधुराः ॥ ३१ ॥

---

(क) कथं ज्ञातास्म्यमात्येन । तत्कथयामि विश्रब्धं यथार्थं शृणोत्वमात्यः । अहं खलु देव्या बुद्धेः सहचरी राज्ञा जीवेन तापसीवेषं कृत्वा रात्रौ पुरं प्रविश्य यक्ष्मराजस्य विचारणीयो व्यवसाय इति प्रेषितास्मि । तथैव विचार्यार्यं प्रतारयितुं प्रच्छन्नेव स्थितास्मि ।

(ख) त्वमेव गत्वा इमं वृत्तान्तं भण । राज्ञो निवेदनादपि तव पुरतः कार्यनिवेदनमभ्यर्हितम् । अहं पुनर्दुर्जनसंसर्गकृतं कलुषं प्रक्षालयितुं महानदीं स्नातुं गच्छामि ।

तस्मात्प्रबलजडतीक्ष्णप्रकृतीनां वातपित्तकफानां मध्ये प्रबलो यो वातः स तु बहुविधस्नेहविशेषप्रयोगेण वशीकार्यः । तदनुगतस्य पित्तस्य मधुरोपचारेणैव सुकरो वशीकारः । उभयविरुद्धो जडो यः कफस्तत्रेतरोपायस्याप्रसरात्तीक्ष्णप्रयोगेणैव स वशमानेतव्यः । एवं च तत्तत्समुचितैरुपायैः सर्वामयनिदानेषु वातादिषु स्वाधीनेषु तज्जनितानामितरेषामुन्मेष एव दूरतोऽपास्तः । किं च ।

सर्वस्मिन्विषये निरङ्कुशतया यद्दुर्निरोधं मनः
प्रायो वायुरिव प्रकृष्टबलवत्सर्वात्मना चञ्चलम् ।
तत्कामादिभिरुद्धतैरुपहतं संप्रेरितैर्यक्ष्मणा
तत्सौहार्दमुपेत्य यद्यपि पुनर्नः प्रातिकूल्यं चरेत् ॥ ३२ ॥

अतस्तदपि महाधिकारेण वशीकृत्य महति व्यापारे विनियोज्य तैरपि दुर्भेदं करिष्यामि । यद्यपि मद्विरोधिचेष्टोऽज्ञानशर्मा मदसंनिधाने राज्ञ उपजापेन कार्यभेदमेव जनयेत् तथापि जाग्रतिः फलकर्मैव (?) ।

सर्वानर्थनिदाने यक्ष्मणि तस्मिन्समूलमेव मया ।
उन्मूलिते ततो नः कर्तव्यं नावशिष्यते किंचित् ॥ ३३ ॥

तथाकर्तुमेव तावद्राजनिकटमेव गच्छामि । (इति कतिचित्पदानि गत्वा पुरो विलोक्य ।) इदं तद्राजभवनम् । यावत्प्रविशामि । कः कोऽत्र भोः ।

(प्रविश्य ।)

**प्रतीहारः**—मन्त्रिन्, किमाज्ञापयसि ।

**मन्त्री**—प्राण दौवारिक, संप्राप्तं मां राज्ञे निवेदय ।

**प्राणः**—तथा । (इत्यन्तःपुरं प्रविष्टः ।)

**मन्त्री**—(परितो विलोक्य ।) इह खलु

संमृज्य शोधिनीभिश्चत्वरवेदीतलेषु रम्येषु ।
रचयन्ति रङ्गवल्लीरन्तःपुरचारिका एताः ॥ ३४ ॥

गृह्णन्वेत्रलतां वसत्यवसरापेक्षो जरत्कञ्चुकी
राजा मामवलोकयेदिति समं वत्सेन गौस्तिष्ठति ।

वादित्रध्वनिमण्डलीकृतगरुद्धर्हीं नटत्यङ्गणे
देव त्वं विजयीभवेति गुणयन्नास्ते शुकः पञ्जरे ॥ ३९ ॥

(प्रविश्य ।)

**दौवारिकः**—(मन्त्रिणं प्रति ।) स्वामिन्, भवन्तं द्रष्टुं बुद्ध्या सह देव्या भद्रासनमधिवसति राजा ।

**मन्त्री**—

अतिपरिचयेऽपि राज्ञो बिभेमि सहसोपगन्तुमभ्यर्णम् ।
येनाग्नेरिव तेजः स्फुरदस्याराान्निवर्तयति ॥ ३६ ॥

(विचिन्त्य ।) परपक्षं प्रति प्रतिविचारणाय प्रेषितां धारणां प्रतीक्षमाण इव लक्ष्यते । भवतु तदेतदहं वक्ष्यामि ।

(ततः प्रविशति बुद्ध्या देव्या सह राजा जीवः ।)

**मन्त्री**—(उपसृत्य ।) विजयतां महाराजः ।

**राजा**—इतो निषीदतु भवान् । (इति मन्त्रिणे आसनं निर्दिशति ।)

**मन्त्री**—(आसने उपविश्य स्वगतम् ।) एष खलु

गण्डूषोदकशोधितेऽपि वदने ताम्बूलरक्ताधरः
स्नानापोहितचन्दनेऽपि वपुषि प्रोद्दामतत्सौरभः ।
निर्णिक्ते सिचये धृतेऽपि कनकाकल्पेन पीताम्बरः
सोऽयं सत्यपि न प्रमाद्यति सदाचारादतिप्राभवे ॥ ३७ ॥

(प्रकाशम् ।) महाराजेन प्रहिताया धारणाया मुखात्तत्रत्यः सर्ववृत्तान्तो विदित एव । सा पुनर्दुर्जनसंसर्गदोषपरिहाराय नदीं स्नातुं गता । तया च मयि संक्रमितस्तत्रत्यवृत्तान्तः ।

**राजा**—(सोत्कण्ठम् ।) कथमिव ।

**देवी**—अहं वि अवहिदह्मि । (क)

**मन्त्री**—(स्वगतम् ।) इयं हि देवी

किमपि नियमिताग्रैः कुन्तलैः स्निग्धनीलैः
परिलसदपराङ्गा धारयन्ती दुकूलम् ।

---

(क) अहमप्यवहितास्मि ।

धवलमुपरि भर्तुश्चामरं धूयमानं
विरमयति करेण व्यक्तमाकर्णनाय ॥ ३८ ॥

(प्रकाशम् ।) श्रोतव्यमिदं धारणावचनम् । यक्ष्महतकः पुरान्निष्क्रामणमेवासाकमिच्छतीति ।

**राजा**—किमत्र प्रतिविधातव्यम् ।

**देवी**—(सोद्वेगम् ।) दाणिं किं कुम्भो । (क)

**मन्त्री**—देवि, मा भैषीः । प्रतिविधानप्रकारोऽपि धारणया विदितः ।

**राजा**—कथमिव ।

**मन्त्री**—(कर्णे) एवमेवम् ।

**राजा**—कथमिदं धारणया निर्धारितम् ।

**मन्त्री**—रसगन्धकप्रयोगमन्तरेण सपरिवारोऽहमजय इति यक्ष्मराजस्य हृदयं विश्वसनीयया तापसीवेषया धारणया गृहीतम् ।

**देवी**—(साश्वासम् ।) जइ एव्वं ता कहं अह्मेहिं रसगन्धआ संपादणिज्जेत्ति । (ख)

**राजा**—

शंभोर्वीर्यं रसो नाम शर्वाण्या नाम गन्धकः ।
ताभ्यामेव प्रसन्नाभ्यां तौ ग्राह्याविति मे मतिः ॥ ३९ ॥

**देवी**—केण उण उवाएण ताणं पसादो संपादणिज्जो । (ग)

**मन्त्री**—उपासनयैव ।

**राजा**—युक्तमुक्तं भवता । श्रूयते हि पुरा मृकण्डुरुमापतिमुपास्य पुत्रं लेभे । तत्पुत्रोऽपि तदुपासनया मृत्युमुखान्मुक्तो दीर्घमायुरलभतेति ।

**मन्त्री**—सम्यगवगतं महाराजेन । यतः खल्वेष

पादाघातत्रुटितयमुनाभ्रान्तबाह्वन्तरोद्य-
द्रक्तस्रोतः समुपशमिताशेषशोकाश्रयाशम् ।

---

(क) इदानीं किं कुर्मः ।

(ख) यद्येवं तत्कथमस्माकं रसगन्धकौ संपादनीयौ इति ।

(ग) केन पुनरुपायेन तयोः प्रसादः संपादनीयः ।

मार्कण्डेयं व्यतनुत यदा सर्वभूतैस्तदादि-
स्तुत्यं मृत्युंजय इति यशः स्फारमीशः प्रपेदे ॥ ४० ॥

**राजा**—पुरा खलु देवदानवैरमृतार्थिभिर्महोरगयोक्त्रपरिवेष्टितविकृष्यमाणमन्दरमन्थानदण्डैर्मथ्यमाने दुग्धसागरे गरलमुद्भटमुत्थितमसहमानेषु भुवनेषु विनष्टप्रायेषु पलायनाभिमुखे चतुर्मुखे विगलितौजसि बिडौजसि भगवानेवैष विषमश्नन् जगदनुचकम्पे। तथाहि।

मेघाक्रान्तदिगन्तदर्शरजनीमूर्छत्तमोमेचकं
तापद्रावितदेवदानवनरं यः कालकूटं गरम्।
जग्ध्वा जम्बिवव बालकस्त्रिभुवनत्राणं ततानाञ्जसा
तस्य द्राघ्महिमा न वाङ्मनसयोः पन्थानमारोहति ॥ ४१ ॥

**मन्त्री**—किमुच्यते महिमेति। श्रूयतां तावत्। त्रिपुरविजयप्रसक्तावसक्त इव स्वयं तदर्थं कतिचित्साधनानि संपाद्य तान्यपि वितथीकृत्य स भगवान्निजमेव महिमानमभिव्यक्तवान्। तथाहि।

सूर्याचन्द्रमसौ रथाङ्गयुगलं सूतो विधाता स्वयं
रथ्याश्वा निगमाश्च यस्य रथमारूढेन भूमीमयम्।
मेरुं धन्वविषक्तवासुकिगुणं कृत्वा शरं चाच्युतं
तिस्रस्तेन पुरः स्मितेन तु परं दग्धाः सुरद्वेषिणाम् ॥ ४२ ॥

**राजा**—एवमपरिमितान्याश्चर्यचरितानि देवस्य।

**देवी**—किं अच्चरिअं। महेसरस्स जह जह जारिसो उपासनं करेदि तह तह तारिसं सो तं तं फलं पावेदि। (क)

**मन्त्री**—एवमेतत्।

**राजा**—एवमनिर्धारणीयनानास्वरूपा भगवतीपरमेतत्। परंतु भगवतो दयारूपैवेयम्। अत एव लोकरक्षणार्था प्रवृत्तिरेतस्याः। श्रूयतां तावत्।

---

(क) किमाश्चर्यम्। महेश्वरस्य यथा यथा यादृश उपासनं करोति तथा तथा तादृशं स तं तं फलं प्राप्नोति।

भक्तिप्रह्वमहेन्द्रमुख्यमखभुक्प्रारब्धभूरिस्तव-
प्राहुर्भावितनिर्भरप्रमदया कारुण्यभाजा यया ।
निद्राभङ्गमवापितेन हरिणा दीप्तौजसा घातया-
मासाते मधुकैटभावतिबलौ सा केन वा वर्ण्यते ॥ ४३ ॥

**मन्त्री**—राजन्, तथ्यमेवाह भवान् । अस्याः किल भक्तवात्सल्यमनन्यतुल्यं पश्यामि ।

दूरोद्धूतविषाणकोटिघटनाचूर्णीकृताम्भोधरं
प्रेङ्खत्पादचतुष्टयीखुरपुटप्रक्षुण्णपृथ्वीतलम् ।
कल्पान्ताभ्रकठोरकण्ठनिनदत्रस्तत्रिलोकीजनं
विक्रान्तं महिषासुरं युधि पुरा चिच्छेद शूलेन या ॥ ४४ ॥

**देवी**—सा खु परमेसरी बहुविहदेवआसत्तिरूआवअवा पअण्डपरक्कमखण्डिअचण्डमुण्डधुम्मलोअणरत्तबीजप्पहुदिदाणवमण्डला सुणीअदि चण्डिआणामधेएत्ति । (क)

**राजा**—तदपि ज्ञायते । यथा खलु ।

शस्त्रच्छिन्नसुरारिसैन्यपिशितग्रासग्रहप्रीतिम-
त्कङ्कक्रोष्टरि संगरे सुरवधूमुक्तप्रसूने स्थितम् ।
देव्या शुम्भनिशुम्भदानववधप्रक्लिन्नचित्तस्तुव-
द्रुद्रेन्द्राग्निकृतान्तनैर्ऋतजलाधीशानिलश्रीदया ॥ ४५ ॥

**मन्त्री**—राजन्, एवं भक्तवत्सलयोरनादिदंपत्योरुपासनया संपादनीया सिद्धिः । किं च ।

सामर्थ्यसिद्ध्यै रसगन्धकानां संयोजनार्थं सकलौषधीश्च ।
संपादयामोऽथ तदाश्रितस्य सर्वौषधीशस्य विधोः प्रसादात् ॥ ४६ ॥

**देवी**—कदमं उण देसं पविसिअ उवासणिज्जा एदे । (ख)

---

(क) सा खलु परमेश्वरी बहुविधदेवताशक्तिरूपावयवा प्रचण्डपराक्रमखण्डितचण्डमुण्डधूम्रलोचनरक्तबीजप्रभृतिदानवमण्डला श्रूयते चण्डिकानामधेयेति ।

(ख) कतमं पुनर्देशं प्रविश्योपासनीयावेतौ ।

णम् । संपदं एसो अत्ताणं वि ण जाणादि राजकज्जं कुदो उण उम्मादं वा उवजावं वा सत्तुकिदम् । (क)

**मन्त्री**—(विहस्य ।) वैधेय, किं वृथा प्रलपसि । देव, अलं धैर्यत्यागेन । एते च मत्संनिहिता रसौषधिविशेषा भवत्सेवनमेव प्रतीक्षमाणा विपक्षक्षपणाय सज्जीभवन्ति तानेताननुगृहाण । (नेपथ्ये ।) देव, एते वयम्

शिवभक्तिप्रसादेन लब्धा मन्त्रिवरेण च ।
सम्यक्संविहिताः सर्वे विपक्षान्विजयामहे ॥ ७५ ॥

पुरस्तादचिरादेवास्माभिर्बाध्यमानं यक्ष्माणं सामात्यं सपुत्रकलत्रं ससैन्यं च पश्य ।

**राजा**—(दृष्ट्वा ।) प्रियं प्रियम् । सर्वे यूयमप्रमत्ता विपक्षक्षपणाय यतध्वम् ।

(ततः प्रविशति यक्ष्मा पाण्डुश्च ।)

**यक्ष्मा**—पाण्डो, क्व पुनरस्मदीया भटाः प्रहारार्थं वर्तन्ते ।

**पाण्डुः**—देव, पश्य । केचिदनुगच्छन्ति, केचित्पुरो गच्छन्ति ।

**कालः**—कर्मन्, यदुक्तं पाण्डुना तत्तथैव । यतः,

अनेकरोगानुगतो बहुरोगपुरोगमः ।
राजयक्ष्मा क्षयः शोषो रोगराडिति यः स्मृतः ॥ ७६ ॥

**कर्म**—जानामि यादृश एष इति ।

नक्षत्राणां द्विजानां च राजाभूद्यो विधुः पुरा ।
तं प्रजग्राह यक्ष्मासौ राजयक्ष्मा ततः स्मृतः ॥ ७७ ॥
देहेषु यः क्षयकृतेः क्षयस्तत्संभवाच्च सः ।
रसादिशोषणाच्छोषो रोगराड्रोगरञ्जनात् ॥ ७८ ॥

**यक्ष्मा**—सखे पाण्डो, प्रबलेषु सामदानभेदा न प्रसरन्ति, अतोऽन्तिम एव प्रयोगः संप्रतिपत्तव्यः । तदत्र किं विलम्बेन ।

---

(क) वयस्य, श्रुतं किमिदानीमप्येतस्य मन्त्रिण इदमेव वचनम् । सांप्रतमेव आत्मानमपि न जानाति राजकार्यं कुतः पुनरुन्मादं वा उपजापं वा शत्रुकृतम् ।

शस्त्राशस्त्रि प्रसह्याथ प्रवृत्ते रणवैशसे।
अजीवकमरोगं वा पुरमेतद्भविष्यति ॥ ७९ ॥

तदेहि। तत्क्षमां भूमिमेव गच्छामः। (इति पाण्डुना सह निष्क्रान्तः।)

**कालः**—कर्मन्, पश्य पश्य विपक्षविजयाय विज्ञानमन्त्रिप्रयुक्तान्भटान्।

**राजा**—वयस्य, मन्त्रिणा दर्शितेन विक्रमव्यापारेण हृदयं मम निर्वृणोति। यतः।

भूपतिरससिन्दूरज्वराङ्कुशानन्दभैरवैः साकम्।
चिन्तामणिश्च शत्रून्राजमृगाङ्कश्च जेतुमुद्युङ्क्ते ॥ ८० ॥

पश्य चात्रारोग्यचिन्तामणेरुत्तरेण।

कृतसिद्धरसेश्वरः पुरस्तात्करमालम्ब्य च वातराक्षसस्य।
समराङ्गणमेति पूर्णचन्द्रोदय एषोऽग्निकुमारदर्शिताध्वा ॥ ८१ ॥

प्रतापलङ्केश्वर एष यश्च प्रतापयत्यत्र निजप्रतापात्।
गदान्धनुर्वातमुखानशेषांल्लङ्केश्वरः शत्रुभिरप्रसह्यः ॥ ८२ ॥

वसन्तकुसुमाकरः सरभसं विधत्ते रणं
सुवर्णरसभूपतिर्वशयते रुजां मण्डलम्।
प्रसह्य वडवानलाभिधमिदं च चूर्णं जवा-
द्विशोषयति सर्वतः प्रबलमग्निमान्द्यारुचिम् ॥ ८३ ॥

सुदर्शनं चक्रमिवामरारीन्सुदर्शनं चूर्णमिदं रणाग्रे।
निहन्ति जीर्णज्वरमाशु पित्तजन्या रुजश्चूर्णयति प्रसह्य ॥ ८४ ॥

प्रबलानलसंकुलितं गदगहनं दुरवगाढमन्येन।
हन्ति धुरि तीक्ष्णसारो वातकुठारः समूलमुन्मूल्य ॥ ८५ ॥

असकृत्स्खलतः किंचिद्गतिमान्द्यविधायिनः।
प्रमेहान्माद्यतो हन्ति मेहकुञ्जरकेसरी ॥ ८६ ॥

गतिमन्थरताधायिवर्ष्मवैपुल्यशालिनः।
सर्वान्वातगजान्हन्ति वातविध्वंसनो हरिः ॥ ८७ ॥

**विदूषकः**—देव, अचेतणा वि एदे चिन्तामणिपहुदिणो संपदं संपहारं कुणन्ति त्ति अच्चरिअम् । ता इन्दजालं विअ एदं मे पडिभादि । (क)

**राजा**—धिङ्मूर्ख, अनभिज्ञोऽसि शास्त्रतत्त्वस्य । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः । अभिमानिदेवताश्चैषां सचेतनाः श्रूयन्ते । (कर्णं दत्त्वा ।) मन्त्रिन्, कोऽयं कलकलाविर्भावः ।

**मन्त्री**—पश्यतु देवः ।

शस्त्राशस्त्रि गदागदि प्रथमतो निर्वर्तिते संयुगे
मुष्टीमुष्टि तलातलि प्रववृते पश्चादिदं भीषणम् ।
जित्वारीनिह देव तावकभटैरापूर्यते काहला
शङ्खः संप्रति शब्द्यते दृढतरं संताड्यते दुन्दुभिः ॥ ८८ ॥

अपि च ।

आस्फालयन्ति दृढमूरुयुगं कराग्रैः
कुर्वन्ति कुण्ठितघनारवमन्दहासम् ।
जीवोऽयमस्मदधिपो जितवानमित्रा-
नित्युद्धतं युधि भटास्तव पर्यटन्ति ॥ ८९ ॥

**विदूषकः**—कहं एत्थ एव भग्गमणोरहदाए परुण्णो विअ जक्खराओ लक्खीअदि । (ख)

**राजा**—वयस्य, सम्यङ्गिरूपितं भवता ।

गण्डस्थलप्रसृमराश्रु करं करेण
निष्पीडयन्कटकटाकृतदन्तपङ्क्तिः ।
यक्ष्मा ललाटघटितभ्रुकुटिः किलाय-
मन्तःस्पृशं रुषमभीक्ष्णमभिव्यनक्ति ॥ ९० ॥

**मन्त्री**—न केवलां रुषं शुचं च ।

---

(क) देव, अचेतना अप्येते चिन्तामणिप्रभृतयः सांप्रतं संप्रहारं कुर्वन्तीत्याश्चर्यम् । तदिन्द्रजालमिवैतन्मे प्रतिभाति ।

(ख) कथमत्रैव भग्नमनोरथतया प्ररुदित इव यक्ष्मराजो लक्ष्यते ।

**विदूषकः**—एसो सोएण पलवन्तो विअ दीसइ । (क)

**मन्त्री**—शृणुमस्तर्हि प्रलापमेतस्य । विषूचीमत्सरावप्येनमनुवर्तेते ।

(ततः प्रविशति विषूचीमत्सराभ्यां सहितो यक्ष्मा ।)

**यक्ष्मा**—हन्त कथं तादृशानामपि मत्सैन्यानामीदृशीयं दुरवस्था । आश्चर्यमाश्चर्यम् ।

जीवस्य ध्वजिनीचरानतिबलाञ्शक्नोति कः शासितुं
दुर्वारैर्युधि पातितानि मम यैः सर्वाणि सैन्यानि च ।
पाण्डुर्मे सचिवः परैरवधि वा भीतः पलायिष्ट वा
नो जाने मम जीवतो बत हताः पुत्रास्तथा बान्धवाः ॥ ९१ ॥

(सशोकावेगम् ।)

भो भोः सुताः क्व नु गताः स्थ विना भवद्भि-
र्जीर्णाटवीव जगती परिदृश्यते मे ।
आक्रम्यते च तमसा हरिदन्तरालं
शोकाग्निसंवलितमुत्तपते वपुश्च ॥ ९२ ॥

(इति मूर्छति ।)

**मत्सरः**—समाश्वसिहि समाश्वसिहि ।

**यक्ष्मा**—(समाश्वस्य ।)

वत्सा हे वदनाम्बुजानि मुदितो द्रक्ष्यामि केषामहं
केषां माक्षिकमाक्षिपन्ति वचनान्याकर्णयिष्ये मुदा ।
मर्त्यानां तनुषु प्रविष्टमचिरान्मां वर्धयिष्यन्ति के
यूयं यत्समरे परैरतिबलैर्नामावशेषीकृताः ॥ ९३ ॥

**कालः**—

पुत्रप्रविलयाद्दुःखं न सोढुं शक्यते जनैः ।
वसिष्ठोऽपि महान्येन ववाञ्छ पतनं भृगोः ॥ ९४ ॥

तदिमं पुत्रशोकसंतप्तं यक्ष्माणमवेक्षितुं न शक्नोमि ।

---

(क) एष शोकेन प्रलपन्निव दृश्यते ।

**कर्म**—अहमप्येवमेव ।

(इत्युभौ निष्क्रामतः ।)

**मत्सरः**—

देवालं शोकेन द्विषि जीवति न खलु धर्मोऽयम् ।
यावच्छक्ति ततोऽरीन्हत्वा शोचन्ति नैव तान्वीराः ॥ ९५ ॥

अत इदानीं पुनरानीय परिभवमरिहतानामस्मदीयानामानृण्यमृच्छतु भवान् ।

**विषूची**—

दाणिं खु एव दिट्ठा राअकुमारा कहिं गदा तुह्मे ।
डज्जइ हिअअं सोओ अग्गी विअ सुक्कतिणजालम् ॥ ९६ ॥ (क)

**यक्ष्मा**—

गण्डद्वयेऽपि गलितैर्नयनाम्बुपूरै-
रामृष्टपत्रलतमाकुलकेशपाशम् ।
पाणिद्वयप्रहतपाटलबाहुमध्य-
मस्या वपुर्मम शुचं द्विगुणीकरोति ॥ ९७ ॥

**मत्सरः**—राजन्, धैर्यमवलम्ब्यताम् । कृतं शोकेन । संप्रति हि कतिपये देवपादमूलोपजीविनः सैन्याः केनापि दुरपनेयप्रवृत्तयः ।

**यक्ष्मा**—ततः किम् ।

**मत्सरः**—ततश्च तत्प्रयोगेण कुण्ठितशक्तिर्भविष्यति विज्ञानमन्त्रिहतकः । तथा च वैरनिर्यातनं कर्तुमुचितमिति प्रतिभाति ।

**यक्ष्मा**—(सविमर्शम् ।) अवन्ध्योऽयं प्रयत्नः । तदर्थमेव शत्रून्मूलनाय गच्छामः । (इति विषुचीमत्सराभ्यां सह निष्क्रान्तः ।)

**मन्त्री**—मत्सरेण कर्णेऽस्माज्जयार्थं किमप्युपदिष्टो यक्ष्मा निष्क्रान्तः

---

(क) इदानीं खल्वेव दृष्टा राजकुमाराः कुत्र गता यूयम् ।
दहति हृदयं शोकोऽग्निरिव शुष्कतृणजालम् ॥

तद्वयमपि तदिङ्गितानुमितं पर्यालोच्य तत्प्रतिविधानाय व्याप्रियमाणा इष्टं साधयामः ।

(इति निष्क्रान्ताः सर्वे ।)

---

सप्तमोऽङ्कः ।

(ततः प्रविशति जीवराजो विज्ञानमन्त्री च )

**जीवराजः**—(सहर्षम् ।)

मन्त्रिंस्त्वदीयमतिकौशलनौबलेन
तीर्णो रणाम्बुधिरभूदतिदुस्तरोऽपि ।
यस्मिन्भयंकरगतिर्ज्वरपाण्डुमुख्यो
रोगव्रजः किल तिमिंगिलतामयासीत् ॥ १ ॥

किं ब्रवीमि संकुलयुद्धेऽस्मदीयानां तदीयेषु प्रवृत्तमोजायितम् ।

एकत्र मण्डभेदो गुटिकाभेदः परत्र मन्दाग्निम् ।
निखिलामयजननकरं निजपानं प्रथममिदमहमदर्शम् ॥ २ ॥

अथ गुलूच्यादिपञ्चभद्रकषायं निकषा यन्नवं (?) तमवलोक्य पलायन्त पित्तसमीरज्वराः । तदनन्तरं जगदन्तरप्रसिद्धः स्वयमनश्वरसारो यक्ष्मपरिक्षपणदक्षिणः सन्नपि संननाह स्वयं त्रैलोक्यचिन्तामणिर्विनिपाताय संनिपातेन साकमष्टविधानामपि ज्वराणाम् ।

स्थावरजङ्गमगरलं ज्वरमामोत्थं व्रणोपजातं च ।
आरोग्यपूर्वचिन्तामणिरपि निघ्नन्मया रणे दृष्टः ॥ ३ ॥

ततः सर्वज्वरानपि निगृहीतवन्तं ज्वराङ्कुशमुत्तरेण गुल्मार्शः संग्रहिणीविपाटितवतो ग्रहिणीकपाटस्य पूर्वभागे

या पञ्चामृतपर्पटी ग्रहिणिकायक्ष्मातिसारज्वर-
स्त्रीरुक्पाण्डुगदाम्लपित्तगदरुक्क्षुन्मान्द्यविध्वंसिनी ।
तामद्राक्षमहं रणे स्त्रियमपि व्यातन्वतीं पौरुषं
चामुण्डामिव चण्डमुण्डसमरप्रक्रान्तदोर्विक्रमाम् ॥ ४ ॥

पश्चाद्भागे तस्याः

अरुचिप्लीहवमिज्वरकासार्शःश्वासशूलानाम् ।
सूक्ष्मैलादिमचूर्णं निरवर्णयमाशु युधि निहन्तारम् ॥ ५ ॥

तदनु जलजाक्ष इव दनुजलोकस्य सिद्धवसन्तः शुक्रदोषस्य गोक्षुरकादिचूर्णमिश्रितपयःपानविधिः पुंस्त्वदोषस्य त्रिविक्रमरसो मूत्रकृच्छ्राश्मर्योर्विष्यन्दनतैलयोगो भगंदरस्य लघुलङ्केश्वरः कुष्ठस्य नित्योदितरसो मूलानां विद्याधररसो गुल्मानां त्रिनेत्ररसः शूलानां महावह्निरस उदररोगाणां गिरिकर्ण्यादिविधिर्गुञ्जातैललेपश्च शिरोरोगस्य चन्द्रोदयवर्तिश्च चक्षूरोगस्य सौवीरादिपक्वतैलनिषेकः कर्णरोगाणां सिद्धार्थत्रिफलाद्यौषधयोगविशेषपानविधिः कृत्योन्मादविषज्वरसर्वग्रहाणां मधुसर्पिर्युतचूर्णविशेषलेहनविधिः पाण्डुहृद्रोगभगंदरशोफकुष्ठोदरार्शसां मेहकुञ्जरकेसरीप्रमेहाणां च विजयमहोत्सवेन समुत्सारितसर्वरोगखेदाः समरजनैरप्यस्तूयन्त । ततः किमप्यवशिष्यते कार्यमस्माकम् ।

**मन्त्री**—स्वामिन्, श्रूयताम् ।

जन्यार्णवोऽरिजनितः सुमहानिदानीं
तीर्णोऽप्यतीर्ण इति निश्चिनुते मनो मे ।
यन्मत्सरेण रणभुव्युपदिष्टकार्यः
कर्णे स तत्परमितो विदधीत यक्ष्मा ॥ ६ ॥

**राजा**—विज्ञानसचिव यथार्थनामधेय, मत्सरेण यक्ष्मणः कर्णे किमुक्तं भवेत् । यक्ष्मा च तदाकर्ण्य किं विदध्यात् । तद्विधानेन चास्माकमुत्तिष्ठेत कीदृशमत्याहितम् ।

**मन्त्री**—(क्षणं विचिन्त्य ।) किमन्यद्ब्रवीमि । केचिदसाध्यरोगा यक्ष्माणमुपासते तैरस्मान्बाधितुं यक्ष्माणं प्रति मत्सरेण संकेतितमिति शङ्के ।

**राजा**—(सवितर्कम् ।) एवमेवास्मासु यक्ष्मा यदि वक्रं विधिमुपक्रंस्यते तत्र कमुपायं पश्यति भवान् ।

**मन्त्री**—'भक्ताय भवते कदापि मया दर्शयिष्यते साम्बः' इति भगवत्या तुभ्यं जातुचिदावेदितं भक्त्या इति कदाचित्कथान्तरे देवेनैव मां

प्रति प्रागुक्तम् । तदिदानीं तामेव भगवतीं भक्तिं हृदि दृढमवलम्ब्य भगवद्दर्शनार्थं संनिधानानुग्रहः प्रार्थ्यताम् । तत एवासाध्यरोगाभिभवः सुलभः प्रतिभाति ।

**राजा**—यद्येवमनुध्याय विध्यादिविबुधकृतनिषेवणं करोमि मनसा शरणं शंकरम् । (इत्यनुध्यायति ।)

**मन्त्री**—आश्चर्यमाश्चर्यम् । भक्तवत्सला भगवतश्चन्द्रचूडस्य परां कोटिमवलम्बते । यदनुध्यानमात्रमनुतिष्ठति स्वामिनि तदाविर्भावसूचनमेतदालक्ष्यते । यत्किल

शैलस्थूलशिरोभिरुग्रभुजगप्रायश्रवोभूषणै-
जीनुस्पर्शिबृहत्पिचण्डचटुलैस्तालद्रुदीर्घाङ्घ्रिभिः ।
प्रावृण्नैशतमिस्त्रनीलतनुभिर्भस्मत्रिपुण्ड्राङ्कितैः
शूलोद्भासिभुजैः समावृतमिदं भूतैरभूद्भूतलम् ॥ ७ ॥

**राजा**—(ध्यानाद्विरम्य कर्णं दत्त्वा ।) अहो भाग्यप्रकर्षो जीवलोकस्य । यतः ।

'जय विश्वपते जयेन्दुमौले जय शंभो जय शंकरेति शंसन् ।
परितः श्रुतिगोचरो जनानां कलुषं लुम्पति काहलीनिनादः ॥ ८ ॥

**मन्त्री**—(सहर्षम् ।) राजन्, फलितस्ते मनोरथः । पश्य ।

आरूढः स्फाटिकक्ष्माधरनिभवृषभं सार्धमद्रीन्द्रपुत्र्या
वीतावष्टम्भकुम्भोदरकरयुगलोदस्तमुक्तातपत्रः ।
गायद्गन्धर्वनृत्यत्सुरगणिकपुरोभागघोषन्मृदङ्गो
गङ्गाभृत्युत्तमाङ्गे शशिशकलधरः शंकरः संनिधत्ते ॥ ९ ॥

अपि च ।

मौलिन्यस्ताञ्जलीनां दरमुकुलितदृङ्निर्यदानन्दबाष्प-
क्लिद्यद्गण्डस्थलानामविरलपुलकालंकृतस्वाकृतीनाम् ।
वेदान्तप्रायभूरिस्तुतिमुखरमुखाम्भोजभाजामृषीणां
पङ्क्त्या पाश्चात्यभागो झटिति निबिडितो दृश्यतामस्य शंभोः ॥ १० ॥

**राजा**—मन्त्रिन्, इतः परं प्रणिपातादिना भगवन्तं प्रसाद्य स्वाभीष्टमर्थं प्रार्थयिष्ये ।

**मन्त्री**—अनितरसाधारणमेतस्य भक्ताभीप्सितप्रदानचातुर्यम् । यः प्रसादितवते पार्थाय पाशुपतमस्त्रं प्रतिपादितवान् । येन च निखिलक्षत्रियकुलजिघृक्षवे भार्गवाय प्रसादीकृतः परशुः ।

**राजा**—उपपन्नमिदम् । एवमपरिमितानि महान्त्याश्चर्यचरितानि देवस्य । यच्च कपिलभस्मीकृतप्रपितामहसंघसमुत्तारणकृतप्रयत्नभगीरथप्रसादितायाः सुरापगाया भुवमुत्तरन्त्या गर्वभञ्जनं नाम मृत्युंजयस्य चरितं तदपि परमाद्भुतमेव ।

**मन्त्री**—जगत्प्रसिद्धमेवेदम् । तथाहि ।

वेगाकृष्टोडुचक्रानुकरणनिपुणश्वेतडिण्डीरखण्ड-
　श्लिष्टोर्मीनिर्मितोर्वीवलयविलयनाशङ्कसातङ्कदेवा ।
विभ्रम्याकाशगङ्गा विधिभुवनभुवः सर्वदुर्वारगर्वा
　निर्विण्णा धूर्जटीयोद्भटघटितजटाजूटगर्भे निलिल्ये ॥ ११ ॥

किंच । अध्वरविधावपराधिनो दक्षप्रजापतेः शिक्षणावसरे रोषसंधुक्षितेन नीललोहितेन विसृष्टः स्वांशभूतः प्रभूतकोपविधूतविनयमुद्रो वीरभद्र एव किं न कृतवान् । तथाहि ।

शूलाग्रक्षतदक्षकण्ठरुधिरैः शोणे रणप्राङ्गणे
　कीर्णो दन्तगणश्चपेटदलितादर्कस्य वक्त्रान्तरात् ।
वीरश्रीकरपीडनोत्सवविधावेतस्य वैश्वानर-
　प्रक्षिप्तोज्ज्वललाजविभ्रमकरो नालोकि लोकेन किम् ॥ १२ ॥

**राजा**—किमिति वर्ण्यतामयमाश्चर्यचर्यो भगवान् ।

क्रोधारूढभ्रुकुटिरलिके क्रूरखड्गप्रहार-
　श्छिन्नग्रीवत्रिदशनिकरच्छन्नसङ्ग्रामभूमिः ।
शक्रश्रीशद्रुहिणशरणालाभविद्राणविद्या-
　दानोन्निद्रः प्रणतजनताभद्रदो वीरभद्रः ॥ १३ ॥

कः पुनरस्य स्वरूपं तत्त्वतः शक्नोत्यवधारयितुं यदन्तर्वाणयः सर्वेऽपि स्वच्छन्दानुरोधात्कलयन्ति स्वरूपमेतस्य । तथाहि—

कर्तारं कतिचित्किलानुमिमते कार्यार्थमुर्व्यादिभिः
केऽप्याहुः पुरुषस्य यस्य पुरतः सृज्यं प्रकृत्या जगत् ।
क्लेशैः कर्मभिराशयैश्च सकलैरस्पृष्टरूपोऽखिल-
प्रज्ञोऽनादिगुरुः स ईश्वर इति व्याख्यन्ति केचित्तु यम् ॥ १४ ॥

अपि च ।

श्रुतमिति निगमान्तेष्वेकमेवाद्वितीयं
निरवधि परिपूर्णं ब्रह्म सच्चित्सुखात्म ।
विलसति किल यस्मिन्विश्वमेतत्तमिस्रे
स्रजि फणिवदबोधादित्थमाहुः किलान्ये ॥ १५ ॥

**मन्त्री**—तत्तादृशमेनमवाङ्मनसगोचरमहिमानं पङ्कजासनपाकशासनप्रभृतयो देवाः प्रणमन्ति भगवन्तम् । अतः सेवावसरं प्रतिपालय क्षणमात्रम् ।

**राजा**—सम्यङ्निरूपितममात्येन ।

नमदमरसहस्रमौलिमालापरिगलितैर्भुवि पारिजातपुष्पैः ।
अलिकुलमनवाप्तदिव्यगन्धग्रहणकुतूहलि कृष्यते समन्तात् ॥ १६ ॥

**मन्त्री**—अवसरोऽयमखिलसुरासुरगुरोः सरोरुहाकरसंवेशविद्यादेशिककलाशेखरस्य सेवनाय देवस्य । अत एव

संभ्रान्तनन्दिकरघूर्णितवेत्रपात-
भीतापगत्वरगणव्रजवर्जितेन ।
एतेन कीर्णकुसुमेन पथा महेशं
सेवस्व भक्तिमदुर्लभसंनिधानम् ॥ १७ ॥

(ततः प्रविशति यथानिर्दिष्टः परमेश्वर्या सह परमेश्वरः ।)

**परमेश्वरः**—अयि गिरीन्द्रसुते,

अनितरसाधारणया भक्त्या जीवस्य मामनुसरतः ।
सपदि मयास्य पुरस्तात्संनिहितं सपरिवारेण ॥ १८ ॥

**देवी**—देव, तुरिअं तुह्म आगमणं एव्व दंसेदि अणण्णतुल्लं भत्तिमत्तणम् । (क)

---

(क) देव, त्वरितं तवागमनमेव दर्शयत्यनन्यतुल्यं भक्तिमत्त्वम् ।

**राजा**—(मन्त्रिणा सह त्वरितमुपसृत्य ।)

विधिहरिविषमेक्षणात्मकः सन्सृजति बिभर्ति निहन्ति यो जगन्ति ।
तदहममलमेकमेव सच्चित्सुखवपुषं परमेश्वरं नतोऽस्मि ॥ १९ ॥

(इति प्रणमति ।)

**भगवान्**—वत्स, मन्त्रिणा सममभिमतेन युज्यस्व ।

**जीवः**—(मन्त्रिणा सहोत्तिष्ठन् । शिरस्यञ्जलिं बद्ध्वा ।)

जय जय जगदीश देवासुरावध्यतादर्पवेगोद्धृतत्वत्पदाङ्गुष्ठनिष्पीडनस्तब्धकैलासमूलात्तदोर्विंशतिप्रस्तुतस्तोत्रपुष्यद्दयारक्षितोन्मुक्तलङ्कापते निष्प्रपञ्चाकृते

जननमरणलाभपौनःपुनोदीततद्भञ्जनारब्धघोरव्रतप्रीणितत्वक्कठोरश्रवःप्रार्थनाजातकोपोत्थशापामिषाशीभवत्तापसत्राणकृद्धामरूपग्रह स्वेषु सानुग्रह ।

अनुपमितगृहीततारुण्यलक्ष्मीनिरीक्षोन्मिषद्दारुकारण्यनारीव्रतभ्रंशकुप्यन्मुनीन्द्राभिचारोत्थितं तुङ्गनादं कुरङ्गं ज्वलज्ज्वालमग्निं कराभ्यां वहन्दृश्यसे सद्भिरामृश्यसे

कलशभवमहर्षिवातापिनिर्वापणादक्षिणोर्वीभरापादनाविन्ध्यसंस्तम्भनासिन्धुनाथाम्बुनिःशेषनिष्पानशक्तिप्रदायिस्वपादाम्बुजध्यानमाहात्म्य शंभो नमस्ते नमस्ते ॥ २० ॥

पुनः

प्रसूनशरदाहिने प्रबलकालकूटाशिने
कृतान्तपरिपन्थिने त्रिपुरगर्वनिर्वासिने ।
जटापटलयन्त्रितामरतरङ्गिणीस्रोतसे
प्रपन्नभयहारिणे प्रमथनाथ तुभ्यं नमः ॥ २१ ॥

निष्क्रियस्यापि देवस्य जगत्सृष्ट्यादिकर्मणि ।
प्रवृत्तिं कुर्वतीं देवीं प्रपद्ये भक्तवत्सलाम् ॥ २२ ॥

**देवी**—णाह, इमस्स मणोरहं पुच्छिअ झत्ति तं णिवत्तेहि ।(क)

---

(क) नाथ, अस्य मनोरथं पृष्ट्वा झटिति तं निर्वर्तय ।

**भगवान्**—प्रिये, किमत्र प्रष्टव्यम्। विदितमेव। यक्ष्मराजः कैश्चिदसाध्यरोगैः सहानुगतो विकुर्वाणो निर्मूलं छेत्तव्य इत्येतस्य मनोरथ इति तत एतस्मै योगसिद्धिमुपदिश्य निर्जितनिखिलरोगं ब्रह्मरन्ध्रस्थितचन्द्रमण्डलनिःष्यन्दमानामृताप्लुतशरीरं निजानन्दानुभवतुच्छीकृताखिलप्राकृतसुखान्तरं सफलमनोरथमेनं कृतार्थयिष्यामि।

**देवी**—(सहर्षम्।) सरिसं खु एदं तुम्हकेरस्स भत्तवच्छलस्स। (क)

**भगवान्**—वत्स जीव, योगसिद्धिमुपदिशामि ते।

**जीवः**—भगवन्, को नाम योगः कीदृशी वा तस्य सिद्धिः।

**भगवान्**—वत्स, श्रूयताम्। योगश्चित्तवृत्तिनिरोधः। चित्तं नामान्तःकरणम्। यच्चक्षुरादिकरणद्वारा बहिर्निगच्छद्विषयाकारेण परिणमति। यत्तादात्म्यापन्नो द्रष्टापि तद्रूपाकार एव परिभाव्यते। तदुक्तम्—

'ध्यायन्त्यां ध्यायतीवात्मा चलन्त्यां चलतीव च।
बुद्धिस्थे ध्यानचलने कल्प्येते बुद्धिसाक्षिणि॥' इति।

'ध्यायतीव लेलायतीव' इति श्रुतिः। तस्य वृत्तयो नाम कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्याद्याः श्रुतीरिता आन्तराः, बाह्याश्च शब्दस्पर्शादिविषयग्राहिण्यः। सत्त्वरजस्तमोरूपगुणत्रयात्मिकानां च तासां दैवासुरसंपद्रूपत्वेन द्वेधा विभाग उक्तो गीतायाम्—

'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥'

इत्यादिर्दैवी संपत्। 'दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च' इत्यादिरासुरी संपत्। तत्र दैवी संपत्सात्त्विकी। आसुरी तु रजस्तमःप्रधाना। 'दैवी संपद्विमोक्षाय निबन्धायासुरी मता'। तासां च सर्वासामान्तरीणां बाह्यानां च चित्तवृत्तीनां निरोधो नाम स्वविषयेभ्यः प्रतिनिवर्त्य क्वचित्सगुणे निर्गुणे वा वस्तुनि चित्तस्य समवस्थानम्। तच्च दृढतरवैराग्यसत्कारनिरन्तरसेवनाभ्यां सबलेन लभ्यते। तदुक्तम्—

(क) सदृशं खल्वेतद्युष्मादृशस्य भक्तवत्सलस्य।

'असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥' इति ।

एतादृशस्य योगस्य सिद्धिर्नाम ध्येयवस्तुसाक्षात्काररूपावस्थितिः ।

**मन्त्री**—भगवन्,

एवंभूताः क इव घटते चित्तवृत्तीर्निरोद्धुं
वैराग्येणाभ्यसनविधिना स्याच्चिरात्तन्निरोधः ।
जेयः शीघ्रं रिपुरपरथा न स्थितिर्नः पुरेऽतो
योगे सिद्धिर्भवति च यथानुग्रहस्ते तथास्तु ॥ २३ ॥

**जीवः**—भगवन्,

स्मृतिस्ते सकलाभीष्टं दत्ते किमुत दर्शनम् ।
तत्प्राप्तममितैः पुण्यैः सद्यः सिद्धिं ददातु मे ॥ २४ ॥

**देवी**—(सदयम् ।) देव, संकप्पादो जेव्व से जोअसिद्धी होदु त्ति अणुगेह्णीअदु एसो । (क)

**भगवान्**—वत्स, देव्यैवमनुगृहीतोऽसि । संकल्पादेव ते योगसिद्धिर्भवतु ।

**मन्त्री**—राजन्, भगवत्या भगवता च संकल्पादेवाखिलयोगसिद्धिरनुगृहीता । तत्सर्वथा कृतार्थाः स्मः ।

**राजा**—(सप्रणामम् ।) अनुगृहीतैवेयम् । यतः ।

या प्रत्यक्षपदार्थमात्रविषया सा योगसंस्कारतः
संस्कारान्प्रतिबध्नतीतरकृतान्धीः कापि मे जृम्भते ।
सूक्ष्मं यत्तु विदूरमव्यवहितं सर्वान्विशेषान्स्फुटं
पश्याम्येष यथावदद्य परमार्थोद्भूतया प्रज्ञया ॥ २५ ॥

आश्चर्योऽयं भगवत्प्रसादमहिमा ।

**भगवान्**—देवि, एवं संप्रज्ञातसमाधिरेतस्य प्रादुर्भूतः, य एवमालम्बनामनुभवति ऋतंभरां नाम प्रज्ञाम् । अतः परं निर्बीजयोगसंज्ञमसंप्रज्ञातसमाधिमस्यानुगृह्णामि ।

---

(क) देव, संकल्पादेवास्य योगसिद्धिर्भवत्वित्यनुगृह्यतामेषः ।

**देवी**—अणुगेह्णीअदु अप्पणिव्विसेसो एसो । (क)

**जीवः**—(सहर्षोल्लासरोमाञ्चम् ।) आश्चर्यमाश्चर्यम् ।

भगवन्करुणासमित्समिद्धे दृढनिर्बीजसमाधियोगवह्नौ ।
प्रविलापितसर्वचित्तवृत्तिः परमानन्दघनोऽस्मि नित्यतृप्तः ॥ २६ ॥

**भगवान्**—देवि, झटिति विघटिताखिलपराग्वृत्तिः प्रत्यगात्मैक्यानुभवरूपोऽसंप्रज्ञातसमाधिराविर्भूतो वत्सस्य । यत एवमनुभूतमर्थमनुवदति ।

**देवी**—देव, किदत्थो खु एसो जो एवंविधस्स देवाणुग्गहस्स भाअणं जादो । (ख)

**भगवान्**—संप्रत्येनं व्युत्थाप्य प्रकृतकार्यप्रवणं करोमि । (जीवं प्रति ।) वत्स, अन्यदपि किंचिदनुशासनीयोऽसि ।

**जीवः**—(व्युत्थाय ।) भगवन्, अवहितोऽस्मि ।

**भगवान्**—

प्राचीनः सचिवः प्रियस्तव सुहृद्यो ज्ञानशर्मा मुनिः
सोऽन्यस्यापि सुदुर्लभः स भवता मान्यः सदाहं यथा ।
श्रेयःसंघटनाय हन्त भवतः सत्यं स एवार्हति
प्रेयस्त्वैहिकमातनोतु सततं विज्ञानशर्मापि ते ॥ २७ ॥

शश्वज्ज्ञानादभिन्नः सन्विज्ञानमपि मानय ।
एवं सति घटेयातां भुक्तिमुक्ती करे तव ॥ २८ ॥

**राजमन्त्रिणौ**—(साष्टाङ्गं प्रणम्योत्थाय ।) अनुगृहीतौ स्वः ।

**देवी**—सुमरणमेत्तसंणिहिदं णाणसम्माणं सचिवं विण्णाणेण समं मुत्तविरोहं करिअ दुवे वि मन्तिणो रण्णो हत्थे समप्पअन्तेण भअवदा बहुलीकिदं भत्तवत्सलत्तणम् । (ग)

---

(क) अनुगृह्यतामात्मनिर्विशेष एषः ।

(ख) देव, कृतार्थः खल्वेष य एवंविधस्य देवानुग्रहस्य भाजनं जातः ।

(ग) स्मरणमात्रसंनिहितं ज्ञानशर्माणं सचिवं विज्ञानेन समं मुक्तविरोधं कृत्वा द्वावपि मन्त्रिणौ राज्ञो हस्ते समपर्यता भगवता बहुलीकृतं भक्तवत्सलत्वम् ।

(नेपथ्ये ।)

जीवे शिवप्रापितयोगसिद्धौ कालो जनान्ध्येन समं तमोवत् ।
पापो विषूच्या सह राजयक्ष्मा गदैरसाध्यैः सह नाशमेति ॥ २९ ॥

ईशानस्य निदेशात्प्राप्ता साप्यत्र शांकरी भक्तिः ।
चत्वारोऽपि पुमर्थाः पुंभिर्यस्याः प्रसादतो लभ्याः ॥ ३० ॥

**मन्त्री**—(आकर्ण्य ।) प्रियं नः प्रियम् । भगवान्काल एष एवं नः प्रियमाचष्टे ।

**राजा**—(सहर्षोल्लासम् ।)

मूर्धन्यमण्डलनिकेतसुधांशुबिम्ब-
निःष्यन्दिशीतलसुधास्रुतिनिर्वृताङ्गः ।
मेघावृतिव्यपगमे गगनं यथाच्छं
चैतन्यमावरणवर्जितमस्मि तद्वत् ॥ ३१ ॥

**मन्त्री**—एवमेवायं जीवो राजा भगवतोः प्रसादान्नीरोगो नित्यमुक्तो निराबाधो बहुकालं जीयादिति प्रार्थये ।

**भगवान्**—तथैवास्तु ।

**देवी**—तह होदु । (क)

**राजा**—(सहर्षविस्मयं मन्त्रिणं प्रति ।)

मन्त्रिञ्जन्मैव दोषः प्रथममथ तदप्याधिभिर्व्याधिभिश्चे-
ज्जुष्टं कष्टं बतातः किमधिकमपि तु त्वन्मतेर्वैभवेन ।
देव्या भक्त्याः प्रसादात्परमशिवमहं वीक्ष्य कृच्छ्राणि तीर्णः
सर्वाणि द्राक्तदत्यद्भुतमिह शुभदं संविधानं तवेदम् ॥ ३२ ॥

**मन्त्री**—राजन्,

बहुजन्मार्जितैः पुण्यैस्तावकैरेष तोषितः ।
सर्वाभीष्टं ददातीशः संविधानं किमत्र मे ॥ ३३ ॥

**भगवान्**—वत्स, किमतः परमन्यत्तव प्रियं कुर्मः ।

---

(क) तथा भवतु ।

**राजा**—देवदेव भगवन्, सर्वमपि प्रियमाचरितमेव।

सर्वेऽपि मे प्रशमिता रिपवः पुरेऽभू-
दारोग्यमैक्षिषि भवन्तमुमासहायम्।
योगं ततस्त्वदुपदिष्टमवाप्य जीव-
न्मुक्तोऽस्मि ते करुणया किमतः प्रियं मे॥ ३४॥

तथापीदमस्तु भरतवाक्यम्।

पर्जन्यः समयेऽभिवर्षतु फलं वाञ्छानुरूपं महीं
प्रौढामात्यनिरूपिते पथि महीपालाः पदं तन्वताम्।
कर्णालंकृतये भवन्तु विदुषां कान्ताः कवीनां गिरो
भूयादस्य कवेश्चिरायुररुजो भक्तिश्च शैवी दृढा॥ ३५॥

(इति निष्क्रान्ताः सर्वे।)

कृतिरियं श्रीमद्भारद्वाजकुलजलधिकौस्तुभस्य श्रीनरसिंहरायमन्त्रिवरनन्दनस्य श्रीमदानन्दरायमखिनः[1]।

**समाप्तोऽयं ग्रन्थः।**

---

१. अयं जीवानन्दनप्रणेता श्रीमदानन्दरायमखी नृसिंहरायाध्वरिसूनुस्त्र्यम्बकदीक्षितस्य भ्रातृव्यस्तञ्जौरनगरमहीपतेरेकक्षितिपालवंशतिलकस्य शरभापरपर्यायस्य श्रीशाहराजस्य मन्त्रिप्रवर आसीदित्यादि सर्वं जीवानन्दनस्यैतत्प्रणीतस्यैव विद्यापरिणयनाटकस्य च प्रस्तावनातः प्रतीयते. स च शरभमहीपतिः ख्रिस्ताब्दीयसप्तदशशतकपूर्वार्धे आसीदिति स एवास्य समयः. एतत्कृतिषु जीवानन्दनं विद्यापरिणयं चेति नाटकद्वयमस्माभिरुपलब्धम्. जीवानन्दने यद्यपि नास्ति कवित्वचमत्कारस्तथापि संविधानकमनुच्छिष्टं चिकित्साशास्त्रानुकूलमिति कृत्वैवास्य काव्यमालायां प्रवेशः. तत्र जयपुरराजगुरुकुलप्रसूतभट्टश्रीकृष्णकुमाराणां संग्रहादेकमेवास्य शुद्धं पुस्तकमुपलब्धम्. चिरं विहितेऽप्यन्वेषणे पुस्तकान्तरालाभात्तस्मादेव पुस्तकादेतन्मुद्रणमकारीति भद्रम्.

KÂVYAMÂLÂ 28.

# THE DÛTÂNGADA

OF

# SUBHATA.

EDITED BY

PANḌIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆḌURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1891.

*Price 2 Annas.*

काव्यमाला. २८.

श्रीसुभटकविप्रणीतं

# दूताङ्गदम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९१



मूल्यं २ आणकाः ।

# काव्यमाला।

महाकविश्रीसुभटकृतं

## दूताङ्गदम्।

पायात्स वः कुसुदकुन्दमृणालगौरः
शङ्खो हरेः करतलाम्बरपूर्णचन्द्रः।
नादेन यस्य सुरशत्रुविलासिनीनां
काञ्च्यो भवन्ति शिथिला जघनस्थलीषु ॥ १ ॥

अपि च।

शंभोः कोदण्डभङ्गादविदितविभवः शक्रसूनोर्विनाशा-
दज्ञातः सेतुबन्धादपि न परिचितः कैकसीनन्दनेन।
संवादादङ्गदस्याप्यनधिगतगतिः कारणान्मर्त्यमूर्ते-
र्भूयाद्भूत्यै जनानां जगति रघुपतेर्वैष्णवः कोऽपि भावः॥ २ ॥

(नान्द्यन्ते)

**सूत्रधारः**—(परिक्रम्य नेपथ्याभिमुखमवलोक्य।) प्रिये विलासवति, इत-स्तावत्।

---

१. अयं सुभटकविरत्र कुमारपालदेवं वर्णयति. स च कुमारपालः १०८८ मितात्खिस्तसं-वत्सरादारभ्य ११७२ मितसंवत्सरपर्यन्तं गुर्जर(गुजरात)देशं पालयामास. श्वेताम्बर-जैनोऽनेकग्रन्थकर्ता पण्डितवरः श्रीहेमाचार्योऽपि कुमारपालसमकालीन एव. (मुम्बई-मुद्रितसुभाषितावलीपुस्तकोपोद्घातस्य १३९ पृष्ठं विलोकनीयम्.) हेमाचार्यकृतं कुमार-पालचरितं प्राकृतनिबद्धं प्रसिद्धमेव. 'सुभटेन पदन्यासः स कोऽपि समितौ कृतः। ये-नाधुनापि धीराणां रोमाञ्चो नापचीयते॥' इति कीर्तिकौमुद्यां (१।२४) खिस्तसंवत्सर-त्रयोदशशतकपूर्वभागसमुत्पन्नः सोमेश्वरदेवोऽपि सुभटकविं स्तौति. अस्मिन्ग्रन्थे न सर्वे श्लोकाः सुभटकृताः, किं तु भवभूतिराजशेखरादिकृता अपि श्लोका अत्र वर्तन्ते. परकी-यश्लोकग्रहणं च कविरेव स्वयं ग्रन्थान्ते स्वीकरोति. 'पायात्स वः—' इत्यादि प्रथम-श्लोकस्योत्तरार्धं काव्यालंकारटीकायां (३।८) नमिसाधुनोदाहृतः. २. वालिनः. ३. कैकसी रावणादीनां माता. 'नैकषी' इति पुस्तकान्तरपाठः.

(प्रविश्य)

**नटी**—अज्जउत्त, इअह्मि । आणवेदु अज्जो जं करणिज्जं । (क)

**सूत्रधारः**—विश्वविश्वंभराभारसमुद्धरणादिवराहस्य निजभुजयुगलविदलितसकलवैरिवृन्दसुन्दरीनेत्रनीलोत्पलविगलितबहलबाष्पपूरप्लवमानप्रतापराजहंसस्य महाराजाधिराजश्रीमत्त्रिभुवनपालदेवस्य परिषदाज्ञया प्रबन्धविशेषमहमुपक्रममाणोऽस्मि । भो भोः सामाजिकाः, श्रृणुत सावधानाः यदद्य वसन्तोत्सवे देवश्रीकुमारपालदेवस्य यात्रायां पदवाक्यप्रमाणपारंगतेन महाकविना श्रीसुभटेन विनिर्मितं दूताङ्गदं नाम च्छायानाटकमभिनेतव्यम् ।

**नटी**—अज्जउत्त, जुत्तं ववसिदं । (ख)

(नेपथ्ये)

तारापतौ वानरराजलक्ष्मीं निहत्य यो वालिनमानिनाय ।
तीर्णार्णवो दाशरथिः स देवः सुवेलशैलोपवनेष्वखेलत् ॥ ३ ॥

**सूत्रधारः**—आर्ये, प्रारब्धमेव कुशीलवैः । यदमी रामानुचरवीराणां परस्परमालापाः श्रूयन्ते । तदेहि । आवामप्यनन्तरकरणीयाय सज्जीभवावः ।

(इति निष्क्रान्तौ ।)

**प्रस्तावना ।**

---

(ततः प्रविशतः सुवेलशैलशिलातलासीनौ रामलक्ष्मणौ । सुग्रीवादिकश्च विभवतः परिवारः ।)

**रामः**—(लक्ष्मणं प्रति ।) वत्स लक्ष्मण,

---

(क) आर्यपुत्र, इयमस्मि । आज्ञापयत्वार्यो यत्करणीयम् ।

(ख) आर्यपुत्र, युक्तं व्यवसितम् ।

---

१. 'युगलार्गलाविदलित' इति पाठः. २. 'देव' इति पदं पुस्तकान्तरे नास्ति. ३. 'पदवाक्यपारंगमेन' इति पाठः. ४. सुग्रीवे. ५. 'खेलेत्' इति पाठः. ६. 'नर्तकैः' इति पाठः. ७. 'इहैव रामानुचराणां परस्परालापाः' इति पाठः. ८. 'सुग्रीवादिपरिवारश्च' इति पाठः. ९. 'रामः—(लक्ष्मणमवलोक्य ।) तीर्णोऽर्णवः–' इति पाठः.

तीर्णोऽर्णवः कवलितेव कपीश्वरस्य[1]
सेनाभटैर्झटिति राक्षसराजधानी ।
यत्पौरुषोचितमिहाद्य[2] कृतं मयात-
द्दैवस्य वश्यमपरं धनुषोऽथवास्य ॥ ४ ॥

**लक्ष्मणः**—आर्य, कातरजनमनोवलम्बिना दैवेन किम् ।
उद्योगिनं[3] पुरुषसिंहमुपैति लक्ष्मी-
र्दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ५ ॥

अपि च ।

यावल्ललाटशिखरं भ्रुकुटिर्न याति
यावन्न कार्मुकशिखामधिरोहति ज्या ।
तावन्निशाचरपतेः पटिमानमेतु
त्रैलोक्यमूलविभुजेषु भुजेषु दर्पः ॥ ६ ॥

तदादिश्यतामङ्गदाय दौत्यम् ।

**रामः**—(अङ्गदं सबहुमानमालोक्य[4] ।) वत्स,
पिता ते यद्वाली बलिनि दशकण्ठे कलितवा-
न्न[5] तद्वक्तुं शक्ता वयमयमुदास्ते न पुलकः ।
स एव[6] त्वं व्यावर्तयसि तनुजत्वेन पितृतां
ततः किं वक्तव्यं तिलकय निसृष्टार्थपदवीम्[7] ॥ ७ ॥

**अङ्गदः**—(मौलिमण्डलमिलत्करयुगलेन प्रणम्य विज्ञापयति ।) देव,
किं[8] प्राकारविहारतोरणवतीं लङ्कामिहैवानये
किं वा सैन्यमहं द्रुतं रघुपतेस्तत्रैव संपादये ।

१. सुग्रीवस्येत्यर्थः. २. 'इहाङ्कुरितं मयाद्य' इति पाठः. ३. अयं श्लोकः पुस्तकान्तरे नास्ति. प्रसिद्धश्च हितोपदेशादिषु. ४. 'आलोक्य समादिशति ।) महावीर अङ्गद' इति पाठः. ५. 'न शक्तास्तद्वक्तुम्' इति पाठः. ६. 'एष' इति पाठः. ७. निसृष्टार्थो दूतविशेष इत्यर्थः. ८. अस्माच्छ्लोकादारभ्याग्रिमाङ्गदोक्तिपर्यन्तं पुस्तकान्तरे नास्ति.

आकल्पं कुलपर्वतैरविरलैर्बध्नामि वा सागरं
देवादेशय किं करोमि सकलं दोर्दण्डसाध्यं मम ॥ ८ ॥

रामः[1]—वत्स,

अज्ञानादथवाधिपत्यरभसादस्मत्परोक्षे हृता
सीतेयं प्रविमुच्यतामिति वचो गत्वा दशास्यं वद ।
नो चेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
च्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि ॥ ९ ॥[2]

अङ्गदः—देव,

संधौ वा विग्रहे वापि मयि दूते दशानननी ।
अक्षता वा क्षता वापि क्षितिपीठे लुठिष्यति ॥ १० ॥

रामः—साधु[3] भो वालिनन्दन, साधु । (इति पृष्ठे हस्तं दत्त्वा विसृजति[4] ।)

(अङ्गदः प्रणम्य निष्क्रान्तः ।)

सुग्रीवः—(लङ्काशैलशिखरमालोक्य ।) देव, पश्य पश्य ।

सावज्ञमिव संपश्यन्कपिवीरवरूथिनीम् ।
निजांसे दशकण्ठोऽयं दत्ते मत्तेभवद्दृशम् ॥ ११ ॥

तदागच्छत । वयमपि सुवेलशैलवनतिलकितानि जलनिधेस्तटानि पश्यामः ।

(इति निष्क्रान्ताः ।)

(ततः प्रविशति रावणो मन्दोदरी विभीषणादिकश्च परिवारः ।)

रावणः—(विभीषणं प्रति ।) वत्स विभीषण,

एते[5] ते मम बाहवः सुरपतेर्दोर्दण्डकण्डूहराः
सोऽहं सर्वजगत्पराभवकरो लङ्केश्वरो रावणः ।

---

१. 'रामः प्राह' इति पाठः. २. अयं श्लोकः क्षेमेन्द्रेण सुवृत्ततिलके भवभूतिनाम्नोदाहृतः. तत्र च द्वितीयचरणे 'सीतेयं प्रविमुच्यतां शठ मरुत्पुत्रस्य हस्तेऽधुना' इति पाठोऽस्ति. ३. 'साधु अङ्गद, साधु वालिनन्दन' इति पाठः. ४. 'विसर्जयति' इति पाठः. ५. 'एते ते' इत्यादि श्लोकद्वयं पुस्तकान्तरे नास्ति.

सेतोर्बन्धमिमं श्रृणोमि कपिभिः पश्यामि लङ्कां वृतां
जीवद्भिस्तु न दृश्यते किमथवा किं वा नहि श्रूयते ॥ १२ ॥

अपि च ।

जम्भारातीभकुम्भस्थलदलनपटुश्चन्द्रहासाभिधानः
खड्गः किं तापसस्य श्रवणविषयतां न प्रयातो मदीयः ।
यन्नासौ मेघनादप्रभृतिभटशतैर्व्यावृतां वेत्ति लङ्कां
तन्नूनं सत्यमेतत्प्रचलति हि मतिः प्राप्तकालस्य जन्तोः ॥ १३ ॥

यदाखण्डलदर्पेन्दुराहवो बाहवो मम ।
द्रुह्यन्ति तापसेभ्योऽपि तदरिष्टमहो महत् ॥ १४ ॥

**मन्दोदरी**—(स्वगतम् ।)

तं ज्जेव्व अज्ज वि गले गरलं गव्वस्स वरिसए एस ।
जग्गन्ति जेण रक्खसकुलम्मि सोअंकुरकुडप्पा ॥ १५ ॥

(प्रकाशम् ।) णाह, पेक्ख पेक्ख । अच्चरिअं अच्चरिअं ।

विलसिदसरोसवानरवरूहणीकलअलस्स कल्लोला ।
इह तुह विलासवासम्मि वीर विरअन्ति पडिसद्दं ॥ १६ ॥ (क)

**रावणः**—(सावज्ञम् ।) देवि प्रकृतिप्रियवादिनि,[1] अलमलमनया मर्कट-कीटकोलाहलविभीषिकया[2] । किमप्यपरं वक्तुकामासि ।

**मन्दोदरी**—

अज्ज वि ण कोवि दोसो रहुपहुणो देव देहि वैदेहीं ।
मंदोदरीअ मंडणमखंडभावं समब्भेदु ॥ १७ ॥ (ख)

---

(क) तमेवाद्यापि गले गरलं गर्वस्य वर्षत्येषः ।
जाग्रति येन राक्षसकुले शोकाङ्कुरकुड्मलाः ॥

नाथ, प्रेक्षस्व प्रेक्षस्व । आश्चर्यमाश्चर्यम् ।

विलसन्सरोषवानरवरूथिनीकलकलस्य कल्लोलाः ।
इह तव विलासवासे वीर विरचयन्ति प्रतिशब्दम् ॥

(ख) अद्यापि न कोऽपि दोषो रघुप्रभोर्देव देहि वैदेहीम् ।
मन्दोदर्या मण्डनमखण्डभावं समभ्येतु ॥

---

१. 'प्रकृति' इति पुस्तकान्तरे नास्ति. २. 'कटककोलाहलबिभीषया' इति पाठः.

**रावणः**—(सकोपहासम् ।) देवि,

एकं तावदकृत्यमेतदतुलं यन्मैथिलीयं हृता

द्वैतीयीकमिदं विमृश्य यदसौ तस्मै तदा नार्पिता ।

तार्तीयीकमिदं तु यत्कपिभटैर्बद्धेऽद्य वारां निधौ

संधानं दशकंधरो रचयति क्ष्मानन्दिनीमर्पयन् ॥ १८ ॥

तदवतंसयतु भवती विलासगृहम् । (इति मन्दोदरी बाष्पं विसृजन्ती निष्क्रान्ता ।)

**रावणः**—(विभीषणं प्रति ।) वत्स विभीषण, तवापि किमपि वक्तव्यमस्ति ।

**विभीषणः**—देव लङ्केश्वर, विचारय नयचक्षुषा ।

मनुष्यौ न मनुष्यौ तौ वानरास्ते न वानराः ।

व्याजेन किमपि च्छन्नं देव दुर्दैवमेव ते ॥ १९ ॥

तदियं मुच्यतां राक्षसकुलकालरात्रिर्जानकी ।

**रावणः**—(सरोषं खड्गमादाय ।) आः पाप प्रतिपक्षपक्षपातिन् कुलाङ्गार दुराचार, एष ते चन्द्रहासेन शिरः पातयामि । (इति संरभते ।)

(विभीषणश्च सभयमपसरति ।)

**माल्यवान्**—(अन्तराले भवन् ।) देव लङ्केश्वर, विचारय नयचक्षुषा किमहितमभिहितं कुमारविभीषणेन ।

**रावणः**—भोः, त्वमपीदृशः संपन्नः ।

(माल्यवान्सभयं तूष्णीमास्ते ।)

**रावणः**—(विभीषणं प्रति ।) अरे बान्धवापसद, परिहर मे राजधानीम् । तमेव च वनेचरमनुप्रविश्य प्रकाशय नीतिनैपुण्यम् । न पुनः कथाशेषं करिष्यामि ।

**विभीषणः**—न भाव्यमन्यथा भवति । (इति वदन्निष्क्रान्तः ।)

(ततः प्रविशति प्रहस्ताभिधः प्रतीहारः ।)

**प्रहस्तः**—देव, रामस्य दूतोऽहमिति ब्रुवाणः कोऽपि शाखामृगो द्वारमध्यास्ते ।

**रावणः**—(सावज्ञम् ।) प्रवेशय तावत् ।

---

१. 'बान्धवाभास' इति पाठः.

(ततः प्रविशति प्रहस्तेन सहाङ्गदः ।)

**अङ्गदः**—(रावणमवलोक्य स्वगतम् ।)

स एष जगदास्कन्दकौतुकी दशकंधरः ।
यन्मौलिकमलारामे रामः क्षेप्ता शिलीमुखान् ॥ २० ॥

(प्रकाशम् ।)

रे राक्षसाः कथयत क्व स रावणाख्यो
रत्नं रवीन्दुकुलयोरपहृत्य नष्टः ।
त्रैलोक्यदीपनकरास्त्रशिखाकराले
यो रामनामदहने भविता पतङ्गः ॥ २१ ॥

(बहवो राक्षसा रावणरूपं बिभ्रति ।)

**अङ्गदः**—

रे रे रावण रावणाः कति बहूनेतान्वयं शुश्रुमः
प्रागेकं किल कार्तवीर्यनृपतेर्दोर्दण्डपिण्डीकृतम् ।
एकं नर्तनदापितान्नकवलं दैत्येन्द्रदासीजनै-
रेकं वक्तुमपि त्रपामह इति त्वं तेषु कोऽन्योऽथवा ॥ २२ ॥

**रावणः**—(बहुरूपाणि संहृत्य सहेलम् ।) भो भोः शाखामृग, कस्त्वं कस्यासि दूतः ।

**अङ्गदः**—

पितर्युपरते यस्तु नोद्वहेत्पैतृकीं धुराम् ।
तेन नैवोपदेष्टव्याः स्वस्य वंशस्य पूर्वजाः ॥ २३ ॥

तथापि भवतु ।

रक्षोदुर्भिक्षमाधातुमवतीर्णोऽस्ति यः क्षितौ ।
तस्य रामस्य दूतोऽहं सुतस्तस्य च बालिनः ॥ २४ ॥

अपि च ।

तस्य रामस्य दूतोऽहं येन मे जनको हतः ।
बालिनस्तस्य पुत्रोऽहं यद्वीर्यानुभवस्तव ॥ २५ ॥

---

१. 'सदने' इति पाठः.

**रावणः**—(अङ्गदं प्रति ।)

रामः किं कुरुते

**अङ्गदः**— न किंचित्

**रावणः**— अपि च प्राप्तः पयोधेस्तटं

कस्मात्सांप्रतम्

**अङ्गदः**— एवमेव हि

**रावणः**— ततो बद्धः किमम्भोनिधिः ।

**अङ्गदः**—

क्रीडाभिः

**रावणः**— किमसौ न वेत्ति पुरतो लङ्केश्वरो वर्तते

**अङ्गदः**—

जानात्येव विभीषणोऽस्य निकटे लङ्कापदे स्थापितः ॥ २६ ॥

**रावणः**—(साशङ्कम् ।) रामस्याधुना कीदृशी चर्या ।

**अङ्गदः**—

अङ्के कृत्वोत्तमाङ्गं प्लवगबलपतेः पादमक्षस्य हन्तुः
कृत्वोत्सङ्गे सलीलं त्वचि कनकमृगस्याङ्गमाधाय शेषम् ।
बाणं रक्षःकुलघ्नं प्रगुणितमनुजेनादरात्तीक्ष्णमक्ष्णः
कोणेनोद्वीक्षमाणस्त्वदनुजवचने दत्तकर्णोऽयमास्ते ॥ २७ ॥

(रावणस्तत्रावज्ञां नाटयन्, प्रहस्तस्य कर्णे एवमेवं कथयति ।)

**प्रहस्तः**—यदादिशति देवः । (इति निष्क्रान्तः ।)

(ततः प्रविशति प्रहस्तेन सह मायामैथिली ।)

**मैथिली**—जअदु जअदु अज्जउत्तः । (क) (इत्यभिदधाना रावणोत्सङ्गमारोहति ।)

**रावणः**—(स्वगतम् ।) साधु भो मायामयि साधु, जानासि दशकण्ठमाराधयितुम् ।

(क) जयतु जयत्वार्यपुत्रः ।

१. 'रामः किं कुरुते' इत्यादिरङ्गदरावणयोरुक्तिप्रत्युक्तिरूपः श्लोकः. २. सुग्रीवस्य. ३. हनूमतः.

**अङ्गदः**—(सविषादमात्मगतम् ।) अपि नाम जानकी परायाङ्गनाचरितमाचरेत् । भवतु । विलोकयामि तावत् ।

**रावणः**—देवि विदेहनन्दिनि, प्रतिबोध्यतां रामप्रहितोऽयं शाखामृगः ।

**मायामैथिली**—(अङ्गदं सबहुमानमवलोक्य ।) वत्स अङ्गद, मह वयणेहिं पडिबोधेहि राहवं

इम्मवर कीस खिज्जसि राहव तं वज णिअं णअरं ।
दिण्णाहं णिजहिअए सक्खीकिय मयणमेअस्स ॥ २८ ॥

अवि अ ।

मयि रावणंकपंकजविलासहंसीइँ अज्ज रहुणाहो ।
रक्खसभटेहिँ भंजिदभरतं भूसेदु णिजरज्जं ॥ २९ ॥ (क)

**अङ्गदः**—(कर्णौ पिधाय ।) न खलु भवती जानकी । यतः ।

अश्रुतपूर्वाविनया पर्याप्तालंकृता च शीलेन ।
सा राघवस्य पत्नी पुनाति भुवनानि गङ्गेव ॥ ३० ॥

(ततः प्रविश्य पटाक्षेपेण)

**राक्षसी**—

श्रुत्वा रघुपतेः किंचिदनिष्टं देवं मैथिली ।
विधातुं सर्वदुःखान्तं लतापाशेन वाञ्छति ॥ ३१ ॥

**रावणः**—(सखेदम् ।) आः, किमेवमभिहितमनवसरे । राक्षसाः, रक्षत रक्षत जानकीम् । (इति मायामैथिलीं विसर्जयति ।)

**अङ्गदः**—(सहर्षम् ।) परमार्थमैथिलीमयेन तेजसा तिरस्कृतं मायामैथिलीमयमन्धकारम् ।

---

(क) वत्स अङ्गद, मद्वचनैः प्रतिबोधय राघवम्

एषामुपरि कस्मात्खिद्यसे राघव तं व्रज निजं नगरम् ।
दत्ताहं निजहृदयेन साक्षीकृत्य मदनमेतस्य ॥

अपि च ।

मयि रावणाङ्कपङ्कजविलासहंस्यामद्य रघुनाथः ।
राक्षसभटैर्भञ्जितभरतं भूषयतु निजराज्यम् ॥

---

१. 'मैथिली स्वयम्' इति पाठः.

**रावणः**—भो वलीमुख, किमपि वक्तुकामः ।

**अङ्गदः**—

न दोषः स्वल्पोऽपि प्रभवति तवाकृत्यकरणा-
दपि क्रव्यादानां भवति परमं मण्डनमिव ।
अतः क्रव्यादेश त्वयि न परदारापहरणा-
दनौचित्यं किंचित्तदपि विषमाः क्षत्रियरुषः ॥ ३२ ॥

**रावणः**—(सक्रोधम् ।) आः पाप दुर्मुख, मौखर्यदर्शनेन राघवमर्घयसि न पुनर्निदर्शनेन ।

**अङ्गदः**—किमपरमुदाहरणं विलोकय ।

समं प्रतिज्ञया येन तीर्त्वा दुस्तरमर्णवम् ।
वनद्रुमाः सुवेलस्य भज्यन्ते त्वद्भुजा इव ॥ ३३ ॥

**रावणः**—अरे विचारमूढ,

पारावतैः किमयमम्बुनिधिर्न तीर्णः
क्रान्ताः कथं न कपिभिः क्व च नाम शैलाः ।
तद्वेद्मि दोर्बलमसौ यदि शौर्यरेखा-
माविष्करोति करवालकषोपलेऽद्य ॥ ३४ ॥

अपि च रे, रावणं न जानासि ।

आस्कन्धावधि कण्ठपीठविपिने प्राक्चन्द्रहासासिना
छेत्तुं प्रक्रमिते मयैव झटिति त्रुट्यच्छिरासंततौ ।
अस्मेरं गलिताश्रु गद्गदपदं भुग्नं च यद्येष्वभू-
द्वक्त्रेष्वेकमपि स्वयं स भगवांस्तन्मे प्रमाणं शिवः ॥ ३५ ॥

**अङ्गदः**—

किं राघवस्य दशकंधरचन्द्रहास-
वंशेऽभवन्भुवनभीतिभिदः शरास्ते ।
लूनानि यैस्तव शिरांसि पुनः प्ररोह-
मेष्यन्ति मूढ नहि धूर्जटिपर्वणीव ॥ ३६ ॥

**रावणः**—(सकोपं चन्द्रहासमादाय ।) रे अपसरापसर मेऽग्रतः, न पुनः कथाशेषं करिष्यामि ।

**अङ्गदः**—(गन्तुमिच्छन् ।)

रे नक्तंचरराज मुञ्च सहसा देवीमिमां मैथिलीं
मिथ्या किं निजपौरुषस्य नटनप्रागल्भ्यमभ्यस्यसि ।
एतां पश्यसि किं न किंनरगणैरुद्गीतदोर्विक्रमां
सेनां वानरभर्तुरुद्भटभुजस्तम्भाग्रभीमां पुरः ॥ ३७ ॥

अपि च ।

शिरोभिर्मा देवीः शिव इव न ते दास्यति पुनः
प्रबन्धं पश्याब्धेः सरस इव कैलाससुभट ।
हितं तु त्वां ब्रूमो मम जनकदोर्दण्डविजये
चलत्कीर्तिस्तम्भ त्यज कमलबन्धोः कुलवधूम् ॥ ३८ ॥

किं च ।

आदौ येन सुबाहुमुख्यपिशिताहारैः समं ताडका
नीता नाशमतश्च भग्नवदनश्रीस्ते स्वसाकारि च ।
हत्वा येन वने भवद्भटवटून्बद्धोऽम्बुधिश्च क्षणा-
त्कर्ता त्वन्निधनस्य सैष समरे भ्रान्तिस्तवाद्यापि का ॥ ३९ ॥

अपि च ।

रे रे राक्षस मा स्म शंकरवरभ्रान्त्या विभाङ्क्षीरियं
रुष्टो मूढ तदैव यन्मतिरभूत्सीतापहारे हरः ।
नो चेदिष्टकपालमण्डनभृताप्याखण्ड्य मुण्डावलीं
भक्त्या ढौकितमीश्वरेण किमहो प्रत्यर्पितं प्राभृतम् ॥ ४० ॥

अपि च । जानीमहे महेश्वरपरिचरणप्रसङ्गपरमार्थमपि भवतः । मिथ्याभिमानिन्,

आः पौलस्त्य किमेवमुत्पुलकितः स्वस्मै मुहुः श्लाघसे
यत्तोषं गमितः स्वमौलिकमलैर्बालेन्दुमौलिर्मया ।

१. 'तत्र किम्' इति पाठः.

प्राचीनं हि विरञ्चिपञ्चमशिरश्छेदापवादं स्मर-
न्देवोऽदत्त वरं तवापि कृपया कायव्रतं कुर्वतः ॥ ४१ ॥

शृणु रे दशवदन, वदनविवरविनिर्गतवाग्विभीषिकया न विभीमो वयम् ।
(इत्यभिधाय निष्क्रान्तोऽङ्गदः ।)

(नेपथ्ये ।)

त्वयि त्रिभुवनाधीशे हन्ति वानरवाहिनी ।
सज्जो भव महावीर वीरत्वं क्व गतं तव ॥ ४२ ॥

**रावणः**—(सौत्सुक्यम् ।) अये, अस्मदनुजीविनो वध्यमाना भृशं बु-
म्बायन्ते ।

(ततः प्रविशन्ति विक्षताङ्गा निशाचरभटाः ।)

**निशाचराः**—

वानरैर्यदि वध्याः स्मस्त्वयि नाथेऽप्यसांप्रतम् ।
त्वमपि प्राणिते बुद्धिं शाश्वतीं मा कृथा वृथा ॥ ४३ ॥

**रावणः**—(सकोपं प्रहस्तं त्वरितमाहूय ।)

संनह्यतां सपदि राक्षसवीरसेना
के नाम रामहतकस्य वनौकसोऽमी ।
जागर्ति यन्मम भुजे ननु चन्द्रहासः
श्यामीकृतामरवधूमुखचन्द्रहासः ॥ ४४ ॥

(पुनर्विकटं परिक्रामन् ।) अरावणमरामं वा जगदद्य भविष्यति । (इति वद-
न्निष्क्रान्तः ।)

(ततः प्रविशतो हेमाङ्गदचित्राङ्गदौ गगनवीथीसंचारिणौ गन्धर्वौ ।)

**हेमाङ्गदः**—सखे चित्राङ्गद,

दिव्यास्त्रैर्भूर्भुवःस्वस्त्रितयडमरकोड्डामरैर्योधयित्वा
लूनोत्क्षिप्तैः शिरोभिर्दशभिरधिनभो दर्शितैकादशार्कः ।
काकुत्स्थेनावकीर्णो निजविशिखशिखायोगपीठोपहूतो
ब्रह्मास्त्रेणाधिशेते रजनिचरपतेर्वीरशय्यां कबन्धः ॥ ४५ ॥

**चित्राङ्गदः**—सखे, अनया गगनवीथ्या बहोः कालात्संचरावहे निर्भयमेवम् ।

( नेपथ्ये कलकलः ।)

यद्वक्त्राणां दशानामिव दश ककुभः शासितुं सृष्टिरासी-
द्विंशत्यायश्च दोर्भिर्दशगुणितमिव प्राप्तवान्वीर्यवर्ष्म ।
लङ्केन्द्रः संजितेन्द्रः समरभुवि जवाज्जानकीवल्लभेन
ज्योतिर्दीप्रैः क्षुरप्रैः स खलु विरचितो निर्विबन्धः कबन्धः ॥४६॥

**चारणः**—शृणु हेमाङ्गद, चित्राङ्गद, चित्रमिवावलोकय ।

हेलाखण्डितचण्डहेमहरिणैर्बाणैः कुलं रक्षसां
शेषीभूतविभीषणं गुणनिधौ कृत्वापि रामे स्थिते ।
प्रत्युज्जीवितशङ्कया यमजितो लङ्कापतेः कातरै-
र्नो मुक्ताः कुसुमस्रजो न च सुरैरास्फालितो दुन्दुभिः ॥४७॥

**चित्राङ्गदः**—(सचमत्कारं हेमाङ्गदं प्रति ।) सखे हेमाङ्गद, ईदृगेवाद्भुतरसैकभाजनं भवानीपतिभक्तिभासुरः प्रबलप्रतापभरप्रणमितसकलसुरासुरो वीरवीरोत्तंसः खल्वयं नक्तंचरचक्रवर्ती । यः किल पुरा पुरारिपरिचर्यावसरे

बिभ्राणं दशवक्त्रतां क्रममिलत्पञ्चाननीपूजया
यः सर्वं स्वमिव स्वमीश्वरमिति ज्ञात्वा मुखैः पञ्चभिः ।
शंभोरेव शिरःसु तं निजकरं व्यापारयन्वारितः
पार्वत्याः कथमप्यहो न स दशग्रीवो गिरां गोचरः ॥ ४८ ॥

(कर्मप्राबल्यमीक्षमाणः । सखेदम् ।) सखे हेमाङ्गद, पश्य पश्य ।

इह खलु विषमः पुरातनानां भवति हि जन्तुषु कर्मणां विपाकः ।
हरशिरसि शिरांसि यानि रेजुः शिव शिव तानि लुठन्ति गृध्रपादैः ॥४९॥

**हेमाङ्गदः**—सखे, नातिचित्रमेतत् । 'यतो धर्मस्ततो जयः' इत्ययं सत्य एव शास्त्रप्रवादः । अतोऽस्मिन्नर्थे शरीरादिभिः पुण्यापुण्यकारिणामायतिदर्शिता । अत्र रावण एवोदाहरणमापद्यते । तथाहि ।

वपुर्मुख्यं वित्तं व्ययितमिह धर्मार्थमवनौ
खलु स्फारीभूतं वलति विपरीतं नहि पुनः।
बलिं कुर्वञ्शंभोः पलभुजपतिः सत्रिभुवनां
शिरःश्रेणीं लेभे ननु विगमयन्नुत्पलकृते॥ ९० ॥

(नेपथ्ये।)

बाणैर्लाञ्छितकेतुयष्टिशिखरो मूर्छानमत्सारथि-
मांसास्वादनलुब्धगृध्रविहगश्रेणीभिरासेवितः।
रक्षोनाथकबन्धगाढपतनक्षुण्णाक्षदण्डो हयै-
र्हेषित्वा स्मृतमन्दुरास्थितिहृतैर्लङ्कां रथो नीयते॥ ९१ ॥

(पुनर्नेपथ्ये।)

सर्वा गीर्वाणवध्वो व्रजत निजगृहान्बद्धमाधोरण द्रा-
क्स्वर्गेभस्तम्भमालानय सुरकरिणं यामिका यात देवाः।
भूयो दिव्यद्रुमाणां भवतु ननु वने नन्दने संनिवेशो
द्वारि क्षिप्तं यदैन्द्रे दशवदनशिरः किंकरैरङ्कितस्य(?)॥ ९२ ॥

अपि च।

रणरसिकसुरस्त्रीमुक्तमन्दारदामा
स्वयमयमवतीर्णो लक्ष्मणन्यस्तहस्तः।
विरचितजयशब्दो बन्दिभिः स्यन्दनाङ्का-
द्दिनकरकुललक्ष्मीवल्लभो रामभद्रः॥ ९३ ॥

**रामः**—(पुष्पकाधिरूढोऽयोध्यामागच्छन्सीतां प्रति लङ्कारणभूमिं दर्शयन्।)

अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी॥ ९४ ॥

इति नवरसगीर्भिर्जानकीं प्रीणयन्वः
पुलकितललिताङ्गः पैतृकं प्राप्य धाम।

सुखयतु कुलराज्यं पालयन्नुत्कपौरः
प्रकटितबहुभद्रः सर्वदा रामभद्रः ॥ ५५ ॥

स्वनिर्मितं किंचन गद्यपद्यबन्धं कियत्प्राक्तनसत्कवीन्द्रैः ।
प्रोक्तं गृहीत्वा प्रविरच्यते स्म रसाढ्यमेतत्सुभटेन नाट्यम् ॥ ५६ ॥

इति सुभटकविप्रणीतं दूताङ्गदं नाम च्छायानाटकं समाप्तम् ।

समाप्तोऽयं ग्रन्थः ।

---

